BIBLIOTHECA INDICA:

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL.
New Series, No. 1316

॥ शतपथब्राह्मणम् ॥

॥ सायणाचार्यकृतवेदार्थप्रकाशाख्यभाष्यसहितम् ॥

THE ÇATAPATHA BRAHMANA
OF THE WHITE YAJURVEDA
WITH THE
COMMENTARY OF SAYANACHARYA




EDITED BY
LATE ACHARYA SATYAVRATA SAMASRAMI'S
son and pupil
PROF. HITAVRATA SAMAKANTHA.
*Assistant Lecturer, Vedas, The University of Calcutta*

VOL. IX, FASC. 1.

CALCUTTA:
PRINTED BY S. V. CHATTERJI, SATYA PRESS, 16/1, GHOSE LANE
AND PUBLISHED BY THE
ASIATIC SOCIETY, 1, PARK STREET,
1911.

# LIST OF BOOKS FOR SALE

AT THE LIBRARY OF THE

# ASIATIC SOCIETY OF BENGAL,

No. 57, PARK STREET, CALCUTTA,

AND OBTAINABLE FROM THE SOCIETY'S AGENTS,—

MR. BERNARD QUARITCH, *11, Grafton Street, New Bond Street, London, W.*,

AND MR OTTO HARRASSOWITZ, BOOKSELLER, LEIPZIG, GERMANY

*Complete copies of those works marked with an asterisk * cannot be supplied—some of the Fasciculi being out of stock.*

## BIBLIOTHECA INDICA.

### *Sanskrit Series*

| | | Rs. | |
|---|---|---|---|
| *Advaita Brahma Siddhi, Fasc. 2,4 @ /10/ each | .. | 1 | 4 |
| Advaitachinta Kaustubhe, Fasc. 1-3 @ /10/ each | .. | 1 | 14 |
| *Agni Purāṇa, Fasc 3-14 @ /6/ each | | 7 | 8 |
| Aitarēya Brahmana, Vol. I, Fasc. 1-5; Vol. II, Fasc. 1-5; Vol. III, Fasc 1-5. Vol. IV, Fasc. 1-8 @ /10/ | .. | 14 | 6 |
| Aitareyalochanam, (the preface of the Ditto) by Acarya S. V. Samasrami .. | | 2 | 0 |
| *Anu bhāshya, Fasc. 2-5 @ /10/ each | .. | 2 | 8 |
| Aphorisms of Sāṇḍilya, (English) Fasc 1 | | . | 0 |
| Aṣṭasāhasrika Prajñāparamitā Fasc. 1-6 @ /10/ each | .. | 3 | 12 |
| Acvavaidyaka, Fasc. 1-5 @ /10/ each | ... | 3 | 2 |
| *Ātharvana Upanishad, Fasc 3-5 @ /10/ each | | 1 | 14 |
| Avadana Kalpalata, (*Sans. and Tibetan*) Vol. I, Fasc 1-6; Vol. II, Fasc. 1-5 @ 1/ each | .. | 11 | [illegible] |
| A Lower Ladakhi version of Kesarsaga. Fasc. 1-3 @ 1/ each | | 3 | |
| Bālam Bhaṭṭi, Vol I Fasc 1-2, Vol II Fasc I @ /10/ | .. | 1 | 14 |
| Baudhāyana Srauta Sutra, Fasc. 1-3, Vol II Fasc 1-2 @ /10/ each | .. | 2 | 8 |
| *Bhagavati, Fasc 4-8 @ /10/ | ... | 3 | 2 |
| Bhāṭṭa Dīpika Vol. I, Fasc. 1-5 @ /10/- | ... | 3 | 2 |
| Brahma Sutra, Fasc. 1, @ /10/ | .. | 0 | 10 |
| Bṛhaddēvatā, Fasc. 1-4 @ /10/ each | ... | 2 | 8 |
| Bṛhaddharma Purana, Fasc. 1-6 @ /10/ each | ... | 3 | 12 |
| Bodhicāryāvatāra of Cāntidevi, Fasc. 1-5 | .. | 3 | 2 |
| Çatadusani, Fasc. 1-2 | . | 1 | 4 |
| Catalogue of Sanskrit Books and MSS., Fasc 1-4 @ 2/ each | | 8 | 0 |
| Çatapatha Brahmaṇa Vols. I Fasc 1-7, II Fasc 1-5, III Fasc 1-7, V Fasc 1-4 | | 14 | 6 |
| Çatasahasrikā prajñāpāramitā, Part I, Fasc. 1-12 @ /10/ each | | 7 | 8 |
| *Caturvarga Chintāmani (Text) Vols. II, 1-25; III Part I, Fasc 1-18, Part II, Fasc. 1-10 @ /10/ each; Vol. IV, Fasc 1-6 | .. | 36 | 14 |
| Çlokavārtika, (English) Fasc. 1-6 @ 1/4/ | . | 7 | 8 |
| *Çrauta Sutra of Āpastamba, Fasc. 9-17 @ /10/ each | ... | 5 | 10 |
| Ditto Acvālāyan, Fasc 4-11 @ /10/ each | . | 5 | 0 |
| Ditto Çānkhayan, (Text) Vol. I, Fasc 1-7, Vol. II, Fasc. 1-4; Vol. III, Fasc 1-4, Vol IV Fasc 1 @ /10/ each | .. | 10 | 0 |
| Ditto Latyāyan Fasc 1-9 @ /10/ each | .. | 5 | 10 |
| Çri Bhāshyam, (Text) Fasc 1-3 @ /10/ each | . | 1 | 14 |
| Dān Kriyā Kaumudi, Fasc 1-2 | .. | 1 | 4 |
| Gadādhara Paddhati Kālasara, Vol I, Fasc 1-7 | .. | 4 | 6 |
| Ditto Acarasara, Vol II, Fasc. 1-3 | ... | 1 | 14 |
| Gobhiliya Grhyo Sutrum, Fasc. 4-12 @ /10/ | .. | 5 | 10 |
| Kāla Viveka, Fasc. 1-7 | . | 4 | 6 |
| Kātantra, Fasc. 1-6 @ /12/ each | . | 4 | 8 |
| Kathā Sarit Sāgara, (English) Fasc 1-14 @ /1/4/ each | . | 17 | 8 |
| Kūrma Puraṇa, Fasc. 3-9 @ /10/ each | ... | 3 | 2 |
| Lalita-Vistāra, (English) Fasc. 1-3 @ 1/- each | ... | 3 | 0 |
| Ditto Fasc. 3-6 @ /10/ each | ... | 2 | 8 |
| Madana Pārijāta, Fasc 1-11 @ /10/ each | .. | 6 | 14 |
| Mahā bhāṣya-pradipodyota, Vol. I Fasc. 1-9 & Vol. II, Fasc. 1-12, Vol. III, Fasc. 1-6 @ /10/ each | ... | 16 | [illegible] |
| Manuṭikā Sangraha, (Text) Fasc 1-3 @ /10/ each | ... | 1 | 14 |
| Mārkaṇḍeya Purāna (English) Fasc. 1-9 @ 1/- each | ... | 9 | 0 |
| * Ditto (Text) Fasc 5-7 @ /10/ | ... | 1 | 14 |
| *Mimāṃsā Darcana, (Text) Fasc. 9-19 @ /10/ each | — | 8 | 12 |

ॐ

# ॥ शतपथब्राह्मणम् ॥



॥ अथ ॥

## ॥ नवमकाण्डम् ॥

### ॥ अथ प्रथमः प्रपाठकः ॥

॥ प्रथमं ब्राह्मणम् ॥

॥ अग्निचिति प्रथमाध्याये प्रथमं ब्राह्मणम् ॥

॥ हरिः ॐ ॥

अथातः शतरुद्रियं जुहोति। अत्रैष सर्व्वो ऽग्निः संस्कृतः स एषो ऽत्र रुद्रो देवता तस्मिन् देवा एतदमृतꣳ रूप मुत्तम मदधुः स एषो ऽत्र दीप्यमानो ऽतिष्ठदन्न मिच्छमानस्तस्माद्देवा अबिभयुर्यद्वै नो ऽयं न हिꣳस्यादिति * ॥ १ ॥

* 'हिꣳस्यादिति'—इति अ, च।

ते ऽब्रुवन् । अन्न मस्मै सम्भराम तेनैनꣳ शमयामेति तस्मा ऽएतदन्नꣳ समभरञ्छान्तदेवत्यं तेनैनमशमयंस्तद्यदेतं देव मेतेनाशमयंस्तस्माच्छान्तदेवत्यꣳ शान्तदेवत्यꣳ ह वै तच्छतरुद्रिय मित्याचक्षते परोऽक्षं परोऽक्षकामा हि देवास्तथैवास्मिन्नय मेतदमृतꣳ रूप मुत्तमं दधाति स एषो ऽत्र दीप्यमानस्तिष्ठत्यन्न मिच्छमानस्तस्मा ऽएतदन्नꣳ सम्भरति शान्तदेवत्यं तेनैनꣳ शमयति ॥ २ ॥

जर्तिलैर्जुहोति । जायत ऽएष एतद्यच्चीयते स एष सर्वस्मा ऽअन्नाय जायत ऽउभयम्वेतदन्नं यज्जर्तिला यच्च ग्राम्यं यच्चारण्यं यदह तिलास्तेन ग्राम्यं यदकृष्टे पच्यन्ते तेनारण्य मुभयेनैवैन मेतदन्नेन प्रीणाति ग्राम्येण चारण्येन च ॥ ३ ॥

अर्कपर्णेन जुहोति । अन्न मर्को ऽन्नेनैवैन मेतत् प्रीणाति ॥ ४ ॥

परिश्रित्सु जुहोति । अग्नय एते यत्परिश्रितस्तथो हास्यैता अग्निमत्येवाहुतयो हुता भवन्ति ॥ ५ ॥

यद्वेवैतच्छतरुद्रियं जुहोति । प्रजापतेर्व्विस्र-
स्ताद्देवता उदक्रामंस्तमेक एव देवो नाजहान्मन्युरेव
सो ऽस्मिन्नन्तर्व्वितततो ऽतिष्ठत् सो ऽरोदीत्तस्य यान्य-
श्रूणि प्रास्कन्दंस्तान्यस्मिन् मन्यौ प्रत्यतिष्ठंस्स एव
शतशीर्षा रुद्रः समभवत् सहस्राक्षः शतेषुधिरथ या
अन्या विप्रुषो ऽपतंस्ता असंख्याता सहस्राणीमाँ-
ल्लोकाननुप्राविशंस्तद्यद्रुदितात्समभवंस्तस्माद्रुद्राः सो
ऽयꣳ शतशीर्षा रुद्रः सहस्राक्षः शतेषुधिरधिज्यधन्वा
प्रतिहितायी भीषयमाणो ऽतिष्ठदन्न मिच्छमानस्तस्मा-
द्देवा अबिभयुः ॥ ६ ॥

ते प्रजापति मब्रुवन् । अस्माद्वै बिभीमो यद्वै
नोऽयं न हिꣳस्यादिति सो ऽब्रवीदन्न मस्मै सम्भरत
तेनैनꣳ शमयतेति तस्मा ऽएतदन्नꣳ समभरञ्छतरु-
द्रियं तेनैन मशमयंस्तद्यदेतꣳ शतशीर्षाणꣳ रुद्र
मेतेनाशमयं स्तस्माच्छतशीर्षरुद्रशमनीयꣳ शतशीर्ष-
रुद्रशमनीयꣳ ह वै तच्छतरुद्रिय मित्याचक्षते परोऽक्षं
परोऽक्षकामा हि देवास्तथैवास्मा ऽअय मेतदन्नꣳ सम्भ-
रति शतरुद्रियं तेनैनꣳ शमयति ॥ ७ ॥

गवेधुकासक्तुभिर्जुहोति। यत्र वै सा देवता विस्रस्ताशयत्ततो गवेधुकाः समभवन्त्स्वेनैवैनमेतद्भागेन स्वेन रसेन प्रीणाति ॥ ८ ॥

अर्कपर्णेन जुहोति। एतस्य वै देवस्याशयादर्काः समभवत्स्वेनैवैनमेतद्भागेन स्वेन रसेन प्रीणाति ॥९॥

परिश्रित्सु जुहोति। लोमानि वै परिश्रितो न वै लोमसु विषं न किञ्चन हिनस्त्युत्तरार्द्धेऽग्ने-रुदङ् तिष्ठन् जुहोत्येतस्याᳬ ह दिश्येतस्य देवस्य गृहाः स्वाया मेवैन मेतद्दिशि प्रीणाति स्वायां दिश्यव यजते ॥ १० ॥

स वै जानुदघ्ने प्रथमᳬ स्वाहाकरोति। अध-इव वै तद्यज्जानुदघ्न मध-इव तद्यदयं लोकस्तद्य ऽमुं लोकᳬ रुद्राः प्राविशंस्तां स्तत् प्रीणाति ॥ ११ ॥

अथ नाभिदघ्ने*। मध्यमिव वै तद्यन्नाभिदघ्नं मध्यमिवान्तरिक्षलोकस्तद्ये ऽन्तरिक्षलोकᳬ रुद्राः प्राविशंस्तां स्तत् प्रीणाति ॥ १२ ॥

---

* 'नाभिदघ्ने'—इति ग, घ।

अथ मुखदन्न। ऽउपरीव वै तद्यन्मुखदन्न मुपरीव तद्यदसौ लोकस्तद्येऽमुं लोकं रुद्राः प्राविशंस्तां स्तत् प्रीणाति स्वाहाकारेणान्नं वै स्वाहाकारो ऽन्नेनैवैना-नेतत् प्रीणाति ॥ १३ ॥

नमस्ते रुद्र मन्यव ऽइति। य एवास्मिन्नसो ऽन्तर्मन्युर्व्वितता ऽतिष्ठत्तस्मा ऽएतन्नमस्करोत्युतो त ऽइषवे नमो बाहुभ्या मुत ते नम इतीष्टा च हि बाहुभ्यां च भीषयमाणो ऽतिष्ठत् ॥ १४ ॥

स एष एव देवः *। यः स शतशीर्षा समभव-द्धिश इम ऽइतरे ये विप्रुड्भ्यः समभवंस्तस्मा ऽए-तस्मै चत्वारैता विश एतं पुरस्तादुद्धार मुदहरन्य एष प्रथमे ऽनुवाकस्तेनैन मप्रीणांस्तथैवास्मा ऽअय मेतं पुरस्तादुद्धार मुद्धरति तेनैनं प्रीणाति तस्मादेष एकदेवत्यो भवति रौद्र एतं ह्येतेन प्रीणाति ॥ ॥ १५ ॥

चतुर्दशैतानि यजूंषि भवन्ति। त्रयोदश मासाः संव्वत्सरः प्रजापतिश्चतुर्दशः प्रजापतिरग्नि-

* 'देवः'—इति ग. घ.।

यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति नमो नम इति यज्ञो वै नमो यज्ञेनैवैनमेतन्नमस्कारेण नमस्यति तस्मादु ह नायज्ञियं ब्रूयान्नमस्त ऽइति यथा हैनं ब्रूयाद्यज्ञस्त ऽइति तादृक्तात् * ॥ १६ ॥

अथ द्वन्द्विभ्यो जुहोति। नमो ऽमुष्मै चेति तद्यथा वै ब्रूयादसौ† त्वं च न एष च मा हिꣳसिष्टमित्येवमेतदाह नतराꣳ हि विदित आमन्त्रितो हिनस्ति ॥ १७ ॥

नमो हिरण्यबाहवे। सेनान्ये दिशां च पतये नम इत्येष एव हिरण्यबाहुः सेनानीरेष दिशां पतिस्तद्यत् किञ्चैकदेवत्यमेतमेव तेन प्रीणाति एतमेव तद्दिक्ष्वपिभागं करोति तस्माद्यद्दिशस्तस्मिन् क्षत्रियो ऽपिभागोऽथ या असंख्याता सहस्राणीमाँल्लोकाननुप्राविशन्नेतास्ता देवता याभ्य एतज्जुहोति‡ ॥ ॥ १८ ॥

---

* 'तादृक्तत्'—इति ग, घ।

† 'ब्रूयादसौ'—इति च दृष्टं डा० वेबरमहोदयेन।

‡ '०जुहोति'—इति ग, घ।

अथ जातेभ्यो जुहोति। एतानि ह जातान्येते रुद्रा अनुप्रविविशुर्यत्र-यत्रैते तद्वैनानेतत् प्रीणात्यथो ऽएवꣳ हैतानि रुद्राणां जातानि देवानां वै विधामनु मनुष्यास्तस्माद् हेमानि मनुष्याणां जातानि यथाजातमेवैनानेतत् प्रीणाति ॥ १९ ॥

तेषां वा ऽउभयतो नमस्कारा अन्ये *। अन्यतरतोनमस्कारा अन्ये ते ह ते घोरतरा अशान्ततरा य ऽउभयतोनमस्कारा उभयत एवैनानेतद्यज्ञेन नमस्कारेण शमयति ॥ २० ॥

स वा ऽअशीत्यां च स्वाहाकरोति। प्रथमे चानुवाके ऽथाशीत्या मथाशीत्यां च यानि चोर्ध्वानि यजूꣳष्यावतानेभ्यो ऽन्न मशीतयो ऽन्नेनैवैनानेतत् प्रीणाति ॥ २१ ॥

अथैतानि यजूꣳषि जपति। नमो वः किरिकेभ्य इत्येतद्धास्य प्रतिज्ञाततमं धाम यथा प्रियो वा पुत्रो हृदयं वा तस्माद्यत्वैतस्माद्देवाच्छङ्केत तदेता-

* 'अन्ये। ऽन्यतरतो'—इति च

भिर्व्याहृतिभिर्जुहुयादुप हैवैतस्य देवस्य प्रियं धाम गच्छति तथो हैन मेष देवो न हिनस्ति ॥ २२ ॥

नमो वः किरिकेभ्य इति । एते हीदꣳ सर्व्वं कुर्व्वन्ति देवानाꣳ हृदयेभ्य इत्यग्निर्व्वायुरादित्य एतानि ह तानि देवानाꣳ हृदयानि नमो विचिन्वत्केभ्य इत्येते हीदꣳ सर्व्वं विचिन्वन्ति नमो विक्षिणत्केभ्य इत्येते वै तं विक्षिणन्ति यं विचिघीषन्ति नम आनिर्हतेभ्य इत्येते ह्येभ्यो लोकेभ्यो ऽनिर्हताः ॥ २३ ॥

अथोत्तराणि जपति । द्रापे ऽअन्धसस्पत ऽइत्येष वै द्रापिरेष वै तं द्रापयति यं दिद्रापयिषत्यन्धसस्पत ऽइति सोमस्य पत ऽइत्येतद्दरिद्र नीललोहितेति नामानि चास्यैतानि रूपाणि च नामग्राह मेवैन मेतत् प्रीणात्यासां प्रजाना मेषां पशूनां मा भेर्मा रोङ्मो च नः किञ्चनाम मदिति यथैव यजुस्तथा बन्धुः ॥ २४ ॥

स एष क्षत्रं देवः* । तस्मा ऽएतस्मै क्षवायैता

* 'देवः'—इति ग, घ ।

विधो ऽमुं पुरस्तादुद्धार मुदहरन्यो ऽसौ प्रथमो ऽनुवाको ऽथास्मा ऽएत मुपरिष्टादुद्धार मुदहरंस्तेनैन मप्रीणंस्तथै-वास्मा ऽअय मेत मुपरिष्टादुद्धार मुद्धरति तेनैनं प्रीणाति तस्मादप्येष एकदेवत्यो भवति रौद्र एवै-तछ् ह्येवैतेन प्रीणाति * ॥ २५ ॥

सप्तैतानि यजूᳫंषि भवन्ति। सप्तचितिको-ऽग्निः सप्तऽर्त्तवः संवत्सरः संवत्सरो ऽग्निर्यावा-नग्निर्यावत्यस्य मात्रा तावतैवैन मेतदन्नेन प्रीणाति तान्युभयान्येकविᳫंशतिः सम्पद्यन्ते द्वादश मासाः पञ्चऽर्त्तवस्त्रय इमे लोका असावादित्य एकविᳫंश एता मभिसम्पदम् ॥ २६ ॥

अथावतानान् जुहोति। एतद्वा ऽएनान् देवा एतेनान्नेन प्रीत्वाथैषा मेतैरवतानैर्धनूᳫंष्यवातन्वंस्तथै-वैनानय मेतदेतेनान्नेन प्रीत्वाथैषा मेतैरवतानैर्धनूᳫं-ष्यवतनोति न ह्यवततेन धनुषा कं चन हिनस्ति ॥ ॥ २७ ॥

---

* 'प्रीणाति'—इति क।

तद्वै सहस्रयोजन ऽइति। एतद्ध परमं दूरं यत् सहस्रयोजनं तद्यदेव परमं दूरं तदेवैषा मेतद्धनूꣳष्यवतनोति * ॥ २८ ॥

यद्वेवाह सहस्रयोजन ऽइति। अय मग्निः सहस्रयोजनं न ह्येतस्मादिति मत्यन्यत् पर मस्ति तद्यदग्नौ जुहोति तदेवैषाꣳ सहस्रयोजने धनूꣳष्यवतनोति † ॥ २९ ॥

असंख्याता सहस्राणि। अस्मिन् महत्यर्णव ऽइति यत्र-यत्र ते तदेवैषा मेतद्धनूꣳष्यवतनोति ‡ ॥ ॥ ३० ॥

दशैतानवतानान् जुहोति। दशाक्षरा विराड् विराडग्निर्दश दिशो दिशोऽग्निर्दश प्राणाः प्राणा अग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैषा मेतद्धनूꣳष्यवतनोति § ॥ ३१ ॥

अथ प्रत्यवरोहान् जुहोति। एतद्वा ऽएतदिमाँल्लोकानित ऊर्ध्वो रोहति स स पराङिव रोह इय

*, †, ‡, § 'धनूꣳष्यवतनोति'—इति क

मु वै प्रतिष्ठा ते देवा इमां प्रतिष्ठा मभिप्रत्यायंस्तथै-
वैतद्यजमान इमां प्रतिष्ठा मभिप्रत्यैति ॥ ३२ ॥

यद्वेव प्रत्यवरोहति। एतद्वाऽ एनामेतत् प्रीणा-
न्नन्ववैति तत एवैतदात्मान मपोद्धरते जीवात्वै तथो
ह्यानेनात्मना सर्व्व मायुरेति ॥ ३३ ॥

यद्वेव प्रत्यवरोहति। एतद्वा ऽएतदेतान् रुद्रा-
नित ऊर्द्धान् प्रीणाति तान् पुनरमुतोऽर्व्वाचः ॥३४॥

नमोऽस्तु रुद्रेभ्यो ये दिवीति। तद्ये ऽमुष्मिं-
ल्लोके रुद्रास्तेभ्य एतन्नमस्करोति येषां वर्षमिषव
इति वर्षᳬ ह तेषा मिषवो वर्षेण ह ते हिᳬसन्ति
यं जिहिᳬसिषन्ति ॥ ३५ ॥

नमोऽस्तु रुद्रेभ्यो ये ऽन्तरिक्ष ऽइति। तद्ये ऽन्त-
रिक्षलोके रुद्रास्तेभ्य एतन्नमस्करोति येषां वात
इषव इति वातो ह तेषा मिषवो वातेन ह ते
हिᳬसन्ति यं जिहिᳬसिषन्ति ॥ ३६ ॥

नमोऽस्तु रुद्रेभ्यो ये पृथिव्या मिति। तद्ये
ऽस्मिंल्लोके रुद्रास्तेभ्य एतन्नमस्करोति येषा मन्न-

मिषव इत्यन्नꣳ ह तेषा मिषवो ऽन्नेन ह ते हिꣳसन्ति यं जिहिꣳसिषन्ति ॥ ३७ ॥

तेभ्यो दश प्राचीः । दश दक्षिणा दश प्रतीची-र्दशोदीचीर्दशोर्ध्वा इति दशाक्षराव्विराड्विराडग्निर्दश दिशो दिशो ऽग्निर्दश प्राणाः प्राणा अग्निर्यावा-नग्निर्यावत्यस्य मात्रा तावतैवैनानेतदन्नेन प्रीणाति* ॥ ॥ ३८ ॥

यदेवाह दश-दशेति । दश वा ऽअङ्गुलिरङ्गुलयो दिशि-दिश्येवैभ्य एतदञ्जलिं करोति तस्मादु हैतद्-भीतो ऽञ्जलिं करोति तेभ्यो नमो ऽअस्त्विति तेभ्य एव नमस्करोति ते नो मृडयन्त्विति त ऽएवास्मै मृडयन्ति ते यं द्विष्मो यश्च नो द्वेष्टि त मेषां जम्भे दध्म इति य मेव द्वेष्टि यश्चैनं द्वेष्टि त मेषां जम्भे दधात्यमु मेषां जम्भे दधामीति ह ब्रूयाद्यं द्विष्या-त्ततो ऽह तस्मिन्न पुनरस्त्यपि तन्नाद्रियेत स्वयंनिर्दिष्टो ह्येव स यमेवंविद्द्वेष्टि ॥ ३९ ॥

---

* 'प्रीणाति'—इति क ।

विष्कृत्वः प्रत्यवरोहति । त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदन्नेन प्रीणाति स्वाहाकारेणान्नं वै स्वाहाकारो ऽन्नेनैवैनमेतत् प्रीणाति त्रिरित ऊर्ध्वो रोहति तत् षट् तस्योक्तो बन्धुः ॥ ४० ॥

यद्वेव त्रिष्कृत्वः प्रत्यवरोहति । त्रिर्हि कृत्व ऊर्ध्वो रोहति तद्यावत् कृत्व ऊर्ध्वो रोहति तावत् कृत्वः प्रत्यवरोहति ॥ ४१ ॥

अथ तदर्कपर्णं चात्वाले प्रास्यति । एतद्वा ऽएनेनैतद्रौद्रं कर्म करोति तदेतदशान्तं तदेतत्तिरः करोति नेदिद मशान्तं कश्चिदभितिष्ठात्तन्नोहिनसदिति तस्माच्चात्वाले यद्वेव चात्वाले ऽग्निरेष यच्चात्वालस्तथो हैनदेषो ऽग्निः सन्दहत्यथातः सम्पदेव * ॥ ४२ ॥

तदाहुः । कथ मस्यैतच्छतरुद्रियᳩ संवत्सर मग्नि माप्नोति कथᳩ संवत्सरेणाग्निना सम्पद्यत ऽइति षष्टिश्च ह वै त्रीणि च शतान्येतच्छतरुद्रिय

---

* 'सम्पदेव'—इति ग० च

मथ त्रिᳫ्शदथ पञ्चविᳫ्शत्ततो यानि षष्टिश्च त्रीणि च शतानि तावन्ति संवत्सरस्याहानि तत् संवत्सरस्याहान्याप्नोत्यथ यानि त्रिᳫ्शत्त्रिᳫ्शत् मासस्य रात्रयस्तत् मासस्य रात्रीराप्नोति तदुभयानि संवत्सरस्याहोरात्राण्याप्नोत्यथ यानि पञ्चविᳫ्शत्स त्रयोदशो मासः स आत्मा त्रिᳫ्शदात्मा प्रतिष्ठा द्वे प्राणा द्वे शिर एव पञ्चविᳫ्श एतावान् वै संवत्सर एव मु हास्यैतच्छतरुद्रियᳫ् संवत्सर मग्नि माप्नोत्येवᳫ् संवत्सरेणाग्निना सम्पद्यत ऽएतावत्य उ वै शाण्डिले ऽग्नौ मध्यतो यजुष्मत्य इष्टका उपधीयन्ते ऽग्नयो ह्येते पृथग् यदेता इष्टका एव मु हास्यैते ऽग्नयः पृथक् शतरुद्रियेणाभिहुता भवन्ति * ॥ ४३ ॥

तदाहुः। कथ मस्यैतच्छतरुद्रियं महदुक्थ माप्नोति कथं महतोक्थेन सम्पद्यत ऽइति यान्यमूनि पञ्चविᳫ्शतिर्यजुᳫ्ष्यभितो ऽशीतीः स पञ्चविᳫ्श आत्मा यत्र वा ऽआत्मा तदेव शिरस्तत्

* 'भवन्ति'—इति ख।

पत्त्रपुष्पाण्यथ या अशीतयः सैवाशीतीनामाप्तिर-शीतिभिर्हि महदुक्थमाख्यायतेऽथ यदूर्ध्वमशीतिभ्यो यदेवादो महत उक्थस्योर्ध्वमशीतिभ्य एतदस्य तदेव मु हास्यैतच्छतरुद्रियं महदुक्थमाप्नोत्येवं महतोक्थेन सम्पद्यते ॥ ४४ ॥ १ ॥

॥ इति प्रथमप्रपाठके प्रथमं ब्राह्मणम् ॥

॥ श्रीगणेशाय नमः ॥

वागीशाद्याः सुमनसः सर्वार्थानामुपक्रमे ।
यं नत्वा कृतकृत्याः स्युस्तं नमामि गजाननम् ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥

चितीनामुपधानं हि काण्डेऽष्टम उदीरितम् ।
अथाग्निसंस्कारो नवमे सम्यगस्माभिधास्यते ॥

"तथादौ तावच्छतरुद्रियहोमं विधत्ते*—

"अथात इति 'अथ' शब्देनाग्निचित्युपधाय परिसमाप्ता-नन्तर्यमुत्पत्तेः 'अत इति यतः कारणात् अग्निः अस्मिन्

---

* का० श्रौ० सू० १८.१.१. आ० सं० १६.१. १६।.

शमयनीयः अतो होमः शतरुद्रिय मिति कर्मनामधेयं यथा अग्निहोत्रं जुहोतीति। 'शतरुद्रियं जुहोति' शतरुद्रायास्यं शामं भावयेदित्यर्थः। विहितोऽयं होमो रुद्ररूपतापन्नस्याग्नेरुप शमनार्थ इत्याह। 'अत्रैष' इत्यादिना तेनैन शमय- तीत्यन्तेन अत्राग्निचयने एषः 'अग्निः' साकल्येन संस्कृतो भवति। अतएवासौ 'रुद्रो देवताः' यतः कारणाद्देवास्तस्मि- न्नेतच्चयनलक्षणेन संस्कारेण निष्पन्न 'ममृतं' अतएवोत्तमं रूपं 'अदधुः' विस्रंसनात् प्राक् यदमृतं रूप मस्ति तस्य विस्रं- सनावसरे गतत्वादेव पुनरत्र चयनसंस्कारेणादधुः। तस्मा दीपोऽग्निः 'दीप्यमानोन्न मिच्छमानो' तिष्ठन् इच्छमान इति व्यत्ययेन शानच् × × × तथाभिधानात् रुद्राद्देवा अनेनोपायेन नोऽयं हिंस्यादिति अबिभयु रिति ॥ १ ॥

'ते' देवा 'अस्मै' रुद्राय 'अन्नं' समभराम तेनैनं शमयामेति परस्परमुक्त्वा तथैवाकार्षुः। 'शान्तदेवत्यं शान्तदेवतार्थं देवताशान्त्यर्थ मित्यर्थः। अतएव शमनार्थत्वात् तदन्नं शान्तदेवत्यं तच्च देवाः परोक्षकामत्वात् 'शतरुद्रीय' मित्यर्थः। तदत्र साध्यत्वात् कर्मापि तथैव व्यपदिश्यते। तथाच पूर्वं यथैव देवा अकार्षुः तथैवासावपि यजमानः तेन सहंशमितवान् भवति ॥ २ ॥

प्रकृते होमे द्रव्यविशेषं विधाय तस्य चोभयविधानात्मकत्वात् चयनसंस्कारे जात रुद्रदेवतोचित रूपत्वेन प्रशंसति— "जर्तिलै- र्जुहोमा" त्यादिना * 'जर्तिला' आरण्यतिलाः 'स एष' इति उत्पद्यमानस्य सर्वस्य सम्भोगार्थ मुत्पन्नो स एष अग्निः 'सर्वस्मा

* का० श्रौ० सू० १८. १. १

प्रजाय जायते सर्वान्नभोगार्थं जायत इत्यर्थः । साधारण्येन होम-
साधनतया जुहाः प्राप्तावपवाद माह ॥ ३ ॥

"अर्कपर्णेन" । अत्र 'अर्क' इति । अर्कस्य भोग्यं प्रपश्यास्तः पानित्वादवस्त्वं जुहोतीतिचोदितत्वेनाहवनीये होमे प्रसक्तावाह परिश्रित्स्विति * । परिश्रित इति चिताः परितो निखाताः क्षुद्रपाषाणाः तद्विषयं होमः कर्तव्यः । तेषां चाग्नेः परितः स्रयणादग्नि तेनैता आहुतयोऽग्नि मत्येव प्रदेशे हुता भवन्ति । अत्र कात्यायनः "शतरुद्रियहोम उत्तरपक्षस्या परस्या" उत्तरस्यां परिश्रित्स्वर्कपर्णेनार्ककाष्ठेन शातयनिति † ।" अर्ककाष्ठस्य दण्ड-स्थानि करणीयम् ॥ ४. ५ ॥

अथ पुनस्तमिमं होमे शतशीर्षस्य रुद्रस्यनेरवास्य रुद्राणां मुत्पत्तिप्रकारं दर्शयन् तच्छमनार्थतत्वेन प्रशंसति — "यदेतमदित्यादिना । 'प्रजापतेः' सकाशात् विस्रंसमानमर्थं सर्वासु देवतासु निर्गतास्वपि एक एव मन्युः देवस्तमपरित्यज्य तस्मिन्नेवास्तः विस्तृतो तिष्ठन् पश्चात् स प्रजापति विस्रंसनात् 'अरोदीत्' रोदनाच ततो 'यान्यश्रूणि प्रास्कन्दन्' अपतत् तान्यस्मिन्स्थानि 'मन्यौ' प्रतिष्ठितान्यभूवन् ततः स 'मन्युः' शतशीर्षत्वादि गुणको रुद्रोऽभूत् । अथ ततो ये अश्रुकणा जाता स्ते अनेके भूत्वा ‡ पृथिव्यादि लोकान् 'प्राविशत्' "ततश्च ते अनेके 'रुद्राः' जाताः,

* 'प्रसक्त्याद्परिश्रित्स्विति'—इति अ.

† का० श्रौ० सू० १८. १. १

‡ 'रुद्रात्मनाः' इति मु.

रोदनाच्च तेषा मुत्पत्तेः रुद्रत्वम् । 'यः' पुनः 'शतशीर्षा रुद्रः' शतशीर्षो रुद्रोऽभूत् 'प्रतिहितायी' स प्रतिहिताय अभिमुखस्थायै प्रजायै भयायै तस्मात्र मिच्छन्नतिष्ठत् ॥ ६ ॥

तस्माद्देवा अबिभीत्वा * प्रजापतिं दृष्ट्वा ततोऽन्नसम्भरणैः शमयतेत्युपदेशं प्राप्य तथैवान् अतिष्ठत् । एतच्चान्नं शतशीर्षरुद्रशमनार्थत्वाच्छतशीर्षरुद्रशमनीयं तच्च परोक्षकामत्वाद्देवाः शतरुद्रिय मिति व्याचक्षते । अतो यथैव देवाः शतशीर्षं शतरुद्रं शमयन्तथैवाय मपि यजमान एनं शतरुद्रियहोमलक्षणेनोपायेन शमितवान् भवति ॥ ७ ॥

तथैव होमद्रव्यान्तरम् विधाय प्रशंसति — "गवेधुकासक्तुभिरिति । गवेधुका आरण्या गोधूमाः तेषां पिष्टैः शतरुद्रियं जुहुयात् । 'सा' प्रजापतिरूपा 'देवता' 'यत्र' यस्मिन् † प्रदेशे 'विस्रस्ताशयत' अशयदिति शेतेर्लुङि व्यत्ययेन परस्मैपदशब्विकरणे च रूपं, 'ततः' प्रदेशात् गवेधुका जाताः । अतस्तैर्होमसम्पादने स्वचभागे तस्यैवार्थप्रदर्शनम् । "स्वेन रसेनेति । स्वकीयेन रसेन येन भागेनैनं प्रीणितवान् भवति । अत्र जर्त्तिलैर्जुहोति गवेधुकासक्तुभिर्जुहोतीति पृथगेव विहितत्वाद्द्रव्यविकल्पः । अत एवापस्तम्बेन सूचितम् ,— "शतरुद्रियं जुहोति जर्त्तिलयवाग्वा गवीधुकयवाग्वा जर्त्तिलैर्गवीधुकसक्तुभिः कुसयसर्पिषाजाक्षीरेण मृगक्षीरेणवेति ‡ । यत्पुनरुक्तं कात्यायनेन,— "जर्त्तिलमिश्रान्

* 'अविनीत्वा' इति ज ।

† '-देवाभयस्मिन् प्रदेशे' इति भ

‡ आ० श्रौ० सू० १७ ११. ३

गवेधुकामसृन्" * —इतीति मन्त्रमयेनैतच्छाखान्तरानुसारिणोक्त मित्यवगन्तव्यम् ॥ ८ ॥

अर्कपर्णेन जुहोत्यन्नकर्म इत्यनेनैवार्कपर्णहोमसाधनत्वेन विहितम्। पुनरपि प्रकारान्तरेण स्तौति - "अर्कपर्णमिति। आशयो हृदयदेश: ॥ ९ ॥

अर्कपर्णवदेव परिश्रितोऽपि प्रकारान्तरेण स्तौति—

"परिश्रित्सु जुहोतीति। 'लोमानि' देहे 'परिश्रित:' अयन्ति परिश्रितोऽप्यस्मिं परित: अयन्तीति लोमानि 'लोमसु' विषमस्ति लोमसु विष संस्पृष्टेष्वपि बाधाभावात्। अतश्च लोमात्मकेषु परिश्रित्सु होमाद्रुद्रोपि न किञ्चनापि वस्तु हिनस्ति। "एतस्यां ह दिश्यत्यस्येत्यादिकस्याय अर्थ:— एतस्य देवस्य रुद्रस्य गृहादुत्तरस्यां दिशि भवन्ति। तस्या दिशो न हिंस्यात्मकत्वात्। अत एतदुत्तरार्द्धहोमेन स्वस्या मेव (!) दिशि एनं रुद्रं प्रीणाति स्वस्या मेव तेमवयजते पृथक् करोति ॥ १० ॥

स वा अग्नीत्यादि स्वाहा करोतीत्यादिना तिसृष्वपिश्रीतिषु स्वाहाकार: क्रियत इत्युपरिष्टाद्दक्ष्यते तत्र कस्मिन् प्रदेशे स्वाहाकार इति तत्राह— "स वै जानुदघ्न इति। 'जानुदघ्ने' जानुप्रमाण प्रदेशे सोऽध्वर्यु: प्रथमं स्वाहाकरोति। तथा सति देशस्यार्धदेशत्वादधस्थानां पृथिवीं प्रविष्टान् रुद्रानेतेन प्रीणाति ॥ ११ ॥

---

* का० श्रौ० सू० १८० ।१ ।

एवं 'नाभिदघ्नं' 'मुखदघ्नं' च। स्वाहाकारणान्तरिक्षगताद्यु-लोकं गतांश्च रुद्रान् प्रीणितवान् भवति। लोकत्रयेऽपि पतिता अश्रु-कणाः समुत्पन्ना रुद्राः समभवन्निति प्रागुक्तम्। अथ या अन्या * इत्यादिना स्वाहाकारस्य हविर्लक्षणाद्यप्रदानसाधनत्वेनाद्यस्यास्तेन होमविधानेन एतान् रुद्राननेन प्रीणितवान् भवतीत्याह— "स्वाहाकारेणेति ॥ १२, १३ ॥

अथ प्रथमानुवाकस्य प्रथमा मृचं व्याचष्टे— "नमस्त इति। अस्मिन् प्रजापतौ स प्रागुक्तोऽयमेव 'मन्युर्विततोऽतिष्ठत्'। 'तस्मा' एवैतेन नमस्करोति। यद्यप्यत्र मन्युरेव शतशीर्षा रुद्राः समभवत् इति मन्युरेव रुद्रः समभवदिति मन्यु रेव रुद्रः तथापि 'रुद्र'-शब्देनाश्च तदाधारत्वेनाभेदात् प्रजापतिः कथ्यते। 'इषवे बाहुभ्यां नम' इति। तत्रैव 'भीषयमाणो ऽतिष्ठत्' इति। तस्य एव नमस्कारं करोति। मन्युरेव शतशीर्षो रुद्रो भूत्वा इषुणा बाहुभ्यां सर्वेषां भय मुत्पादयामासेति तत्रिबन्धन भयपरिहाराय तेभ्यः सर्वेभ्यो नमस्कारः क्रियते ॥ १४ ॥

"स एष स" मित्यादिकस्याय मर्थः— प्रजापते रोदनावसरे 'स' मन्युरूपो यो देवः † शतशीर्षो रुद्रो ऽभूत् स एव देवः स्वयं 'विप्रुड्भ्यो' ये जाता स्त इतरे 'विशः' ततश्च एता विशः 'तस्मै सर्वायै' य एष प्रथमोऽनुवाक एतं पुरस्तादुद्धारं भाग मकुर्वन्।

* 'ग्राम्या' इति ज।

† 'मन्युरूभयोरित्र;' - इति ज

तेन च भागेनैकं रुद्रं प्रीणितवन्तः। यथा लोके प्रजा राज्ञोभागं प्रदाय प्रीणयन्ति तद्वत्।

यतो यजमानोऽपि तथैव तस्य प्रथमानुवाकलक्षणं भागं कृत्वा तेनैनं तर्पयति। प्रथमानुवाकस्य पुरस्तात् उद्धार: कृत: यत एकदेवत्य: तदेव प्रदर्शितं रौद्र इति ॥ १५ ॥

प्रथमानुवाके षोडश मन्त्रा: तत्र चतुर्दश मन्त्रानवयुत्य स्तौति—"चतुर्दशैतानीति। अधिमासेन सह 'त्रयोदशमासा: संवत्सर: प्रजापतिश्चतुर्दश:' चतुर्दशसङ्ख्यापूर्वक: स पुन: प्रजापति रतन्त्यात्मक.। ततोऽग्निरपि चतुर्दश: तथा चाग्निर्यत्परिमाणक: यस्य च तादृशोऽपि तत्परिमाणक: तत् परिमाणेनैवानेनान्त्यात्मकं रुद्रं प्रीणाति। चतुर्दशमन्त्रसाध्यहोमलक्षणेनानेनान्त्यात्मकं रुद्रं कात्स्न्येंन प्रीणातीत्यर्थ:। मन्त्र पौन: पुण्ये नम: शब्द: प्रयुज्यते स च पूजावचनत्वेन यज्ञात्मक:, ततश्च 'नमोनम इति'। अनेन यज्ञरूपेणैव नमस्कारेणैनं पूजितवान् भवतीत्याह— "नमोनम इति। नमस्यतीति नमोऽविवक्षितं क्वचितप्यत्र नमस: पूजाया मिति वचनात् पूजायें क्यच् प्रत्यय:। तस्मादुर्हेति यस्मान्नम: शब्दो यज्ञ: तस्मान्नमस्त इत्येतदयज्ञियं न ब्रूयात्। किन्तु 'यज्ञियं' यज्ञकर्माह मेव ब्रूयात् ततश्च एनं रुद्रं 'यज्ञस्त इति' यथा ब्रूयात् नमस्त इत्यपि तद्देवोक्तं भवति ॥ १६ ॥

अथ हन्तिभ्यो होमं विधत्ते "अर्थति। "नमो हिरण्यबाहव ऽइत्यादिषु मन्त्रेषु प्रतिपाद्या देवता हन्तिन: तत्र द्वयोर्द्वयो द्व-

तयोः प्रतिपादनात् 'दिशाञ्च पतये नम' इत्येतद्धिरण्यबाहवे सेनान्य ऽइत्येतयो विशेषणम्। एव मुत्तरत्रापि एकैकस्य विशेषणाण् यत् द्वयोर्देवतयो * प्रतिपादनं भवति। अमुष्मैचामुष्मैचेति 'नमो हिरण्यबाहव' इत्यादि द्विरिमा निर्देशः, यथा लोके 'असौ त्व' च एष च उभावपि नो 'मा हिंसिष्ट' मिति जनो ब्रूयात् एव मेवायुष्मा अमुष्मा इत्यपि नाभिहितं भवति। लोके 'असौ त्वं च एष च नो मा हिंसिष्ट मित्येव' मभिधानस्य प्रयोजनं दर्शयति। 'विदितो' जातोऽत्र 'आमन्त्रितः' सन् 'नतरां हिनस्ति'। ततश्च प्रज्ञातेऽपि तद्देवाभिधानात् रुद्रो हिनस्तीति भावः। ततो मेव हंहितो दर्शयति— "नमो हिरण्यबाहवे" इति। 'एष एव' रुद्र एव 'हिरण्यबाहुः सेनानीः' दिशाम्पतिश्च। अत उक्तो मन्त्रे 'नमो हिरण्यबाहव' इति प्रथमानुवाकः शतशीर्षरुद्रो दैवत्यः। द्वितीयाद्यनुवाका इतररुद्रदेवत्याः। तथापि 'यत्किञ्चा-त्रैकदेवत्यं' तदपि शतशीर्षरुद्रस्येत्याह। "यत्किञ्चेति। अत्रापि द्वितीयाद्यनुवाकेष्वपि यत्किञ्चैकदेवत्य मेकवचनान्तमन्त्रसाध्य-होमलक्षणमत्र मस्ति तेनापि एत मेव रुद्रं प्रीणाति। 'त' मव 'स एष अन्नं देवः' † 'विश इमे ये इतर' ‡ इति उक्तत्वात्। प्रजाया मपि त' मन्नभाजनं करोति। तस्माल्लोकेऽपि प्रजाया यदन्न मस्ति, तत्रापि क्षत्रिय सम्बन्धो भागो विद्यते। हन्तेभ्यो हरिकेशेभ्य इत्यादि बहुवचनान्तमन्त्रप्रतिपादिताभ्यो

---

* "द्वयोरेवदेवतयोः"—इति भ०।

†, ‡ पुरस्तादिहैव १५ कण्डी. पृ० ५. प० ६, १०।

याभ्यो देवताभ्य एतद्धोमं करोति, ताः पृथिव्यादि लोकात् प्रविष्टा विप्रुड्भ्यो जाता अनेका रुद्र देवताः बहुवचनान्तमन्त्रसाध्यो होमोऽपि विप्रुषां रुद्राणा मित्यर्थः ॥ १७, १८ ॥

हविर्होमानन्तरम् 'जातेभ्यो' जुहुयादित्याह— "अथैतिनमः सभाभ्यः सभापतिभ्य इत्यादि प्रतिपादितानि हविर्विशेषभूतान्येवजातानि एतानि खलु जातान्येतद्रुद्राः प्रविविशुः। तत्र तमेवैनान् प्रीणाति। किञ्चैवं 'एतानि रुद्राणां जातानि' खलु देवताविधानं प्रकार मनुसृत्य मनुष्या भवन्ति। तस्मादेतानि मनुष्याणा मपि जातानि। अतो मनुष्यजातेभ्यो एव होमे सति देवजातेभ्योऽपि स्यादिति जाते एव तान् रुद्रान् प्रीणाति ॥ १९ ॥

तेषां मन्त्राणां मध्ये केचन उभयतो नमस्काराः, केचनान्यतरतो नमस्कारा इति। तद्द्वैधस्य कारण माह— "तेषां वा इति। अन्यत्र सर्वत्र होमे प्रतिमन्त्रद्रव्यप्रक्षेपे स्वाहाकार इत्यत्रापि तथैव प्रामाणवादाः ॥ २० ॥

"स वा इति। स सव अध्वर्यु मन्त्राणा 'मशीत्यां' सकृत् 'स्वाहा करोति'। 'प्रथमेऽनुवाके च' सकृत् स्वाहा करोति। अथ पुनरशीत्यां तथैवोत्तरस्यामशीत्याञ्च तत्र प्रथमानुवाके षोडशमन्त्राः। तेषां सर्वेषा मन्ते सकृत् स्वाहाकारः। अथ 'नमो हिरण्यबाहव' इत्यारभ्य 'अर्भकेभ्यो नम'* इत्यन्त मेका अशीतिः सम्पद्यते। एकैकस्यां कण्डिकाया मष्टावष्टौ मन्त्राः। 'दिशां च

* वा० सं० १६. १७—२६

पतये नमः' इत्यादिकं विशेषणतया सम्बन्धनीय मिति प्रागे-वोक्तम् *। तथा च दशसु कण्डिकासु मन्त्राणा मशीतिः सम्पद्यते 'नम स्तक्षभ्य' इत्यारभ्य 'सुधन्वने'† चेत्यन्तं एका चशीतिः सम्प-द्यते। पुन 'र्नमः स्तुत्याच' इत्यारभ्य 'धनुष्कृद्भ्यश्च वो नम'‡ इत्येत मेका चशीतिः सम्पद्यते। एतस्या चशीत्या ऊर्द्ध्वं चवदानमन्त्रेभ्यः पूर्वाणि च यजूंषि सन्ति। एतद्द्वोत्तरत्र विनियोगाय प्रति-निर्द्देष्टुं निर्द्दिष्टं 'चशाशीत्या च स्वाहा करोति', यानि 'चोर्द्धानि' वेति यदुभय निर्द्दिष्टं तत्राशीतिः प्रशंसति — "चन्न मशीतय इति चशीति शब्दः चशिधातुः स्मरणादन्नत्वर्थतमाशीतिषु स्वाहाकारे चनेनैवान् रुद्रान् प्रीणाति ॥ २१ ॥

चथ यानि चेति निर्द्दिष्टानां विनियोग माह— "चथैता-नीति। "एतद्धास्येत्यादिकस्याय मर्थः— 'यथा प्रियः पुत्रो वा हृदयं वा' 'प्रतिज्ञातमं' चभिमतं 'धाम' स्थानं तद्वदेतत् मन्त्र-चतुष्टय मपि 'प्रियं धाम तस्मात्प्यैतस्मा ह्येयाच्छन्त' शक्तितो भवति तदेताभि र्व्याहृतिभि र्जुहुयात्। तथा चैतस्य रुद्रस्य प्रियं धामैव प्राप्नोतीति स देव पश्चादेनं न हिनस्तीति ॥ २२ ॥

मन्त्रान् क्रमेण व्याचष्टे— "नमो वः किरिकेभ्य इति § एते हि रुद्रा इदं सर्वं मपि जगत् कुर्व्वन्ति। एतेषां प्रजापत्यमुखत्व-

---

* इष्टेव पुरस्तात् १८ कण्डी, पृ० ६, पं० १०।

† वा० सं० १६. २७—३६।

‡ वा० सं० १६. ३७ – ४६ क।

§ वा० सं० १६. ४६ ख।

नित्यवत्त्वेन प्रजापत्यात्मकत्वात् । अत एते 'किरिकाः' कर्तारः ततस्तादृशेभ्यो वो नमोऽस्त्विति मन्त्रार्थः । "अग्निर्वायु रिति । 'अग्निर्वायुरादित्य' इत्येतानि 'देवानां हृदयानि' यथा हृदयं प्रधानं तद्वदेतेऽपि प्रधानानीत्यर्थः । अतस्तदात्मकेभ्यो रुद्रेभ्यो नम इत्यर्थः । अत्राग्निर्वायुरादित्यप्रकाशकमन्त्रसाहित्येनैतेषां मन्त्राणां व्याहृतिशब्देनाभिधानं ; किञ्चाग्निवायुसूर्यादेवानां हृदयानीति तत् प्रकाशकाना मपि मन्त्राणां हृदयत्वं तन्मात्मदभिप्रायेण 'एतद्वास्य प्रतिष्ठानतमं धाम वा' यथा प्रियो वा पुत्रो हृदयं इत्युक्तं * विचिन्वन्त एव विचिन्वत्काः ; एते हि रुद्रा इदं सर्वं विचिन्वं-यथ्यवहारार्थम् । अतस्तत् परिहाराय तेभ्यो नम इत्याह । विक्षिणन्त एव विक्षिणत्काः एते रुद्रा यं विनाशं कर्तुं मिच्छन्ति तं विक्षिणवन्ति । अतश्च तेभ्यो नम इत्याहर्जिजय इत्यस्य व्यत्ययेन स्वार्थप्रत्यये रूपम् । "एतेभ्योति । 'एते' हि रुद्रा एभ्यः' पृथिव्यादिलोकेभ्यो 'निर्हता' निर्गताः । तत्र विशांस्येषोत्सुकत्वेभ्य अत 'आनिर्हतेभ्यो' रुद्रेभ्यो नम इत्याह ॥ २३ ॥

व्याहृतिजपानन्तर एव सुत्तराणि यजूंषि अर्पदिव्याह "अथेति । तत्र प्रथमं मन्त्रं व्याचष्टे—"एष वा इति । 'यं' जनं 'दिद्धापयिषति कुत्सितं कर्तुं मिच्छति । तं तथा करोति † । अतएव 'एष' रुद्रो द्रापं 'अन्धः' शब्देन सोमलक्षण मन्नं विवक्षित मित्याह,

* पुरस्तात् इहैव २२ कण्डि, पृ० ७, पं० १५ ।

† 'तं तथैव करोति'—इति क ।

— "सोमस्येति । 'दरिद्रनीलरोहितेति' एतान्येतस्य रुद्रस्य 'नामानि च रूपाणि' च भवन्तीति । तस्य नाम ग्रहीत्वैवेनं रुद्रं प्रीणितवान् भवतीत्याह 'दरिद्रेति' । 'आसां प्रजाना मेषां पशूनां' मित्येव भागस्तु स्पष्टार्थं इत्याह । "यथैवेति । अस्य ज्ञानरुद्ररूपविशं शतशीर्षरुद्ररूपाय अस्याय प्रथमानुवाकम् । पुरस्तादुच्चारमुदहरन् 'अथ द्रापे ऽअन्ध मस्पत' * इत्येव मनुवाक मुपरिष्टादुच्चार मुद्धृत्य न मप्रीणत् । तथैव यजमानोप्यन्त्यदनुवाक-जपेन कृतवान् भवतीत्याह ॥ २४ ॥

"स एव इत्यादिना । यतोऽस्य रुद्रस्यैकोऽनुवाक उच्चारः कृतः तस्मात् स रुद्रैकदेवत्य इत्याह— "तस्मादिति । एतस्मिन्ननुवाके यजुर्गता समत्वसङ्ख्याकास्त्येन दृसिहेतु भवतीत्याह ॥ २५ ॥

"सप्तेतानीति । 'समर्विशकोऽस्मिः' इत्यनेनैकेन प्रकारेणास्य: समत्वसङ्ख्या सम्बन्ध उक्तः । 'सप्तऽर्त्तवः संवत्सरः संवत्सरो ऽस्मिः' इत्यनेन प्रकारेण समत्वसङ्ख्यायोगित्वं प्रदर्श्यते । अधि-मासापेक्षया संवत्सरं सप्तऽर्त्तवो भवन्ति । प्रथमानुवाके एत-स्मिन्ननुवाके च मिलिताया यजुःमन्त्रास्त्वित्यपोदार्नो प्रशं-सति ;— "तान्युभयानीति । चतुर्दशैतानि यजूंषि भवन्तीति । तत्रोक्तत्वाच्छानि चतुर्दश अन्यानि सप्त च मिलित्वा उभया-न्यपि एकविंशतिः सम्पद्यते । सा चैकविंशति सङ्ख्या 'द्वादश मासाः पञ्चर्त्तवस्त्रय इमे लोका असावादित्य एकविंश' इति ।

* वा० सं० १६. ४७ ।

येषा सङ्ख्यासम्पत्तिस्ता मभिलक्ष्य भवति, तथाविधा सङ्ख्या-
सम्पत्तिरत्र सम्पादिता भवतीत्यर्थः ॥ २६ ॥

अथावतानाख्यान् होमान् कुर्यादित्याह *,— "अथेति।
सहस्राणि सहस्रश इत्यादि मन्त्रसाध्या होमा अवतानाः;
तेषाम्यवतान्यन्त अवरोहन्ते धनूंषिभिरित्युपविंश इति तत्
अत्रा। तेषा मुख होमे वाथं प्रयोजनतया दर्शयति— "एतद्वा
धनूष्यवातन्वन्ति आरोपितानि धनूष्यवरोपितवन्त इत्यर्थः। न
ह्यवतनेत्यनेनावरोपणस्य प्रयोजनं दर्शितम् ॥ २७ ॥

मन्त्रेषु सहस्रयोजनस्यादग्निहोमेन पदप्रयोगात् परमे दूरे †
धनुषा मवरोपणं कृतं भवतीत्याह— सहा इति। "अथाग्नेः
सह प्रयोजनत्वादग्नि होमेन ‡ सहस्रयोजन एव धनुषा मव-
रोपणं सम्पादितवान् भवतीत्याह ॥ २८ ॥

"यद्देवेति। अय मग्निः सहस्रयोजन इत्यनद्देवोपपाद्यते।
न ह्येतस्मिन् एतद्व्यतिरिक्त मन्यत् किञ्चिदपि च पुपरसाधकं
नास्ति (?)। तस्याग्नेः प्राधान्यात्मकत्वेन सर्वाधिकत्वात्। अत-
याग्ने सहस्रयोजनत्वेन तत्र होमे सहस्रयोजन एव धनुषा मव-
रोपणं सम्पादितवान् भवति ॥ २९ ॥

मन्त्र 'असंख्याता सहस्राणि। अस्मिन् महत्यर्णव

---

* "अथावतानाख्यान् होमा अवतानाः। तेयाम्यवतन्यन्ते अनु-
कुर्यादित्याह"—इति भ, च।

† 'परमे धूर धनुषा मवरोपणं कृतं भवतीत्याह'—इति भ, च।

‡ 'सहस्राख्यौ होमेन'—इति च।

इत्येतत् पदप्रयोगस्याभिप्राय माह— "असङ्ख्याता इति । 'यत्र यत्र' स्थाने एते भवन्ति तत्र तत्रैव तेषां मेतेन धनूंष्यवरोपयति । 'अर्णवः' शब्देन पृथिव्यादयो लोका विवक्ष्यन्ते । तस्य च महतीत्यनेन कार्त्स्न्यं विवक्ष्यते । एवं च पृथिव्यादिलोकेषु सर्वत्र 'असङ्ख्याता सहस्राणि' अपरिमित सहस्रसङ्ख्याका एते रुद्रा अवतिष्ठन्ते । तेषां सर्वेषा मेव धनुषा मवरोपणं सिध्यतीति ॥ ३० ॥

उक्तां विहितानां मवतानानां होमानां सङ्ख्याविशेषं विधाय प्रशंसति— "दशैतानवतानान् जुहोतीति । 'विराडग्निरिति षष्टिश्चीणि च शतानि यजुष्मत्य इष्टका उपधीयन्ते । ताश्च षड्विंशद्दशकानि भवन्ति । अतएवं दशसङ्ख्यायोगादग्ने विराड्रूपत्वम् । ऊर्ध्वाधो दिग्भ्यां सह * दिशां दशत्वम् । अग्नेस्तु दिगात्मकत्वं सर्वदिग् व्यापकत्वात् मुखे सप्त प्राणाः, अधो पायूपस्थौ द्वौ नाभि र्दशम इति 'दश प्राणाः' । प्राणानाञ्च सूत्रात्मकत्वादग्निः प्राणात्मकः एवञ्च सत्यवतानां दशत्वेनाग्न्यात्मकानां रुद्राणां यावत्परिमाणं तावत्त्वेनैवैतानि धनूंष्यवरोपयति । साकल्येन सर्वेषां धनुरवरोपणं कृतं भवतीति भावः ॥ ३१ ॥

अवतानहोमानन्तरं प्रत्यवरोहान् जुहुयात् इत्याह— "अथेति 'नमोऽस्तु रुद्रेभ्य' † इत्यादि मन्त्रसाध्याहोमाः प्रत्य-

* 'ऊर्ध्वाधो दिग्भिः सह' इति क. ग.।
† वा० सं० १६. ६४—६

वरोहा:, तान् कुर्यादित्यर्थः। तेषा मुपयोग माह,— “एतद्वा इति। एतस्मिन् काले खलु एतेन होमेन ‘इमान्’ पृथिव्यादीन् ‘लोकानित’ ‘ऊर्द्ध्वो’ भूत्वा ‘रोहति’ ‘स’ यजमान: ‘एतद्वा इत्यनेन बुद्धिस्थ: काल: परामृश्यते * एव, इति च शान्त्यादि-प्रमाणेषु कृतो होम: अतश्च ‘स रोह: पराङ्इव’ भवति। तदा-रोहणमात्रा पृथक्तया तयैवोर्द्ध मेव भवतीत्यर्थ:। अतश्च ‘देवा:’ अस्या पृथिव्या: प्रतिष्ठात्मकत्वात् ‘इमां प्रतिष्ठा:’ प्रत्यागतवन्त:। अथो यथैव देवा: प्रत्यागतवन्त: तथैवाय यजमानोऽप्येतेन प्रत्य-वरोहहोमेनेत्यां प्रतिष्ठात्मिकां पृथिवीं प्रत्येति, प्रकारान्तरेण प्रत्यवरोहान् प्रशंसति ॥ ३२ ॥

“यद्देवेति। एतस्मिन् खलु काले एतेन शान्त्यादिषु प्रमा-णेषु कृतेन होमेन ‘एतत्’ रुद्रान् ‘प्रीणन्’ अनुगच्छति यज-मान:। अथैतेन प्रत्यवरोहणेन त एव रुद्रेभ्य ‘आत्मनं’ जीवनाय पृथक् करोति। तथा सत्यनेनेदानीं क्रियमाणेन ‘एवात्मना’ शरीरेण ‘सर्व मायुरेति’ ॥ ३३ ॥

अथ पुनरपि केनचित्प्रकारेण तानेव स्तौति— “यद्देवेति। पूर्वं शान्त्यादिप्रमाणेषु कृतेन होमेन ‘इत ऊर्द्ध्वान् रुद्रान् प्रीणाति’। पूर्वं पृथिव्यादि लोकत्रयानुप्रविष्टान् रुद्रान् पृथिवी मारभ्य द्युलोकपर्यन्तं प्रीणाति। इदानीं द्युलोक मारभ्य पृथिवीपर्यन्तं प्रीणातीत्यर्थ:। अतएव मन्त्र प्रतिलोमं “प्रत्य-

* ‘बुद्धिस्थ: काल: परामृश्यते’ इति ञ।

वरोहान् जुहोति" * इत्युक्तम्। प्रतिलोम्यश्च प्रथमं मुखप्रमाणे पश्चाज्जानुप्रमाणे † होमः ॥ ३४ ॥

अथ प्रत्यवरोहान् प्रदर्शन् व्याचष्टे— "नमोऽस्त्वित्यादिना। 'नमोऽस्तु रुद्रेभ्यो ये दिवीति', ‡ अनेन द्युलोकस्थेभ्यो रुद्रेभ्यो नमस्कारः कृतो भवति। तत्रत्याश्च रुद्रायं हिंसितुं मं 'वर्षेण हिंसन्ति'। अतश्च 'तेषां वो वयं खलु अत उक्तं मन्त्रे,— 'येषां वर्षमिषव इति'। तेभ्यो दश प्राचीरित्यादिक् तु मन्त्रभागस्त्रयाणा मपि समा इत्युत्तरत्र सक्वदेव व्याख्यास्यत इति ॥ ३५ ॥

द्वितीयं मन्त्रं व्याचष्टे — "नमोऽस्तु रुद्रेभ्यो ये ऽन्तरिक्ष ऽइति §। स्पष्टार्थ इति ॥ ३६ ॥

अन्यत् मन्त्रत्रय साधारणम् ‖ ॥ ३७ ॥

"तेभ्यो दशेत्यादिके मन्त्रशेषे पौनः पुन्येन 'दश'-शब्द प्रयोगस्याभिमाह — "दशदशेति। 'दशाक्षरा विराडि'-त्यस्तु प्रागेव व्याख्यातम् ¶ पूर्वदश प्राचीर्दश दक्षिणेत्यादौ सङ्ख्यम् दिग्विशेषं च पर्यालोच्य सङ्ख्या मात्र मुपजीव्य प्रशंसति ॥ ३८ ॥

* का० श्रौ० सू० १८. १. ५।

† 'प्रतिलोम्यश्च प्रथमं मुखमात्रे ततो नाभिमात्रे पुनर्जानुमात्र ऽइति।' का० श्रौ० सू० १८. १. ६।

‡ वा० सं० १६. ६४।  § वा० सं० १६. ६५।

‖ वा० सं० १६. ५६।

¶ "दशाक्षरा वै विराट्"-इति पुरस्तात् १ का० १ अ० १ ब्रा० २२ कण्डौ द्रष्टव्यम्

"इदानीं तत् सर्व मुपजीव्य प्रशंसति— "यद्वेवाहेति। पुरोक्तं करद्वय मञ्जलिरित्युच्यते। तस्य 'वा ऽअञ्जलेरङ्गुलयो दश' भवन्ति। प्रत्येकं हस्तयोः पञ्चाङ्गुलीनां भावात्। तथा च सति प्राचीरित्यादिना मन्त्रभागेन तेभ्यो 'ऽञ्जलिं' करोति *। होमावसरे तेभ्यो दश प्राचीरित्यादिना मन्त्र-भागेन तेभ्यो रुद्रेभ्यः प्राणादि मुखादयः दशाङ्गुलयः कृत इत्यस्यार्थस्य प्रतिपादनात् प्रतिदिश्यवेभ्यो रुद्रेभ्यो ऽञ्जलिं करोति। होमावसरे तेभ्यो दशप्राचीरित्यादि मन्त्रभागकथ-नेनैव तत्र तत्र दिशि वर्त्तमानेभ्यो रुद्रेभ्यो ऽञ्जलिं कृतवान् भवतीत्यर्थः। "तस्मादु हैतद् इत्यञ्जलिकरणस्य कारणम् प्रदर्श्यते। 'तस्माद्भीतः सर्वतेनाञ्जलिं करोतीति' अथवा एवं व्याख्यानम्। यतोऽसौ यजमानाध्वर्युः मुखेन रुद्रेभ्यो भीतः सन् उक्तवान्। तस्मादेतस्मिन् लोकेऽपि जनः भीतो ऽञ्जलिं करोतीति। "तेभ्यो नमो ऽस्त्वित्याद्यवशिष्टमन्त्रभागप्रयोगस्यो-पयोग माह,— "तेभ्यो नम इत्यादिना। 'त एवेति'; त एव रुद्रा 'अस्मै' यजमानाय 'मृडयन्ति' सुखयन्ति। अस्मै यज-मानोऽयमेव. पुरुषं 'द्वेष्टि', यो वैनं यजमानं द्वेष्टि 'त मेषां' रुद्राणां 'जम्भे' मुखे निदधातीत्यर्थः। त मेषां जम्भे दध्म इत्यत्र तमित्यस्य स्थाने अमु मिति प्रयुञ्ज्यादिति कस्यचिन्मतं पूर्वपक्षयित्सु माह— "अमु मेषा मिति। यं पुरुषं द्विषन्ति तम्। 'अमु मेषां जम्भे दध्मः' इति ब्रूयात्। अमु मिति सर्वनामनिर्देशः।

* "पृथाकसंस्त प्रसृत्य ,प्राञ्ची देवान् पूजयन्ति"—निरु० ७. ७. ४।

ततश्च तस्मिन् ह्रियमाणेषु पुनर्न किञ्चिदप्यस्ति म्रियतेत्यर्थः। उत्पन्नमपि मतं निराचष्टे ; अपीति तदुक्तं मत नाद्रियेते-त्यपि कथं तस्य वध्यस्य निर्देशः सेत्यतीति तत्राह स्वय मिति यं पुरुषं एवं यं द्विष्म इति विद्विष्टि स स्वय मेव निर्दिष्टो भवति। नामधेयग्रहणं तन्निर्देशमित्यर्थं भवति स च निर्देशो यं द्विष्मो यश्च नो द्वेष्टि त मेषा मित्यभिधानादेव सिद्ध इति तथा न कुर्यादित्यर्थः॥ ३८॥

अथ प्रत्यवरोहान् जुहोतीति सामान्येन विधानात् सङ्ख्याविशेषं पर्यवसान मभिधत्ते। "त्रिष्कृत्व इति। सा चेय सङ्ख्या रुद्राणां साकल्येन हविर्दत्तु भवतीत्याह,— "त्रिवृ-दिति। अग्नेषु त्रिवृदिति अग्नेस्तु 'त्रिवृत्' प्रकारः, षष्ठकाण्डेऽभिहितः *। 'अग्नियावान् अस्य च मात्रा' यावती तावतैवैना नेतदग्निमग्न्यात्मकान् रुद्रान् प्रीणितवान् भवति। तस्मात्ते स्वाहाकारान्तप्रदानसाधनत्वादग्निरूपेण प्रशंसति, स्वाहाकार-वन्ति। अवरोहणां प्रत्यवरोहणाच्च मिलितां सङ्ख्यां प्रशंसति। त्रिवित इति जान्वादि मुखान्तेषु त्रिषु प्रमाणेषु होमकरणा-दित ऊर्ध्वं त्रिःक्रान्तो रोहत्विति पुनश्च त्रिःक्रान्त्वः प्रत्यवरोहति तथा सति षट्सङ्ख्या सम्पद्यते। तस्याश्च ब्राह्मणम् 'षड्वा ऋतवः' इत्यादिना प्रागेवोक्त † मित्यर्थः॥ ४०॥

प्रकारान्तरेणापि त्रित्व सङ्ख्या मुपपादयति— "यद्देवेति।

* द्रष्टव्य ६ का० ३ अ० १ ब्रा० २५ कण्डौ।

† द्रष्टव्य पुरस्तात ४ का० ५ अ० ५ ब्रा० १० कण्डौ।

'चि:ज्ञस्य' उर्द्धं मारोहणजता तदनुसारेण शिःज्ञस्या एव प्रत्य-वरोहणं ज्ञातं भवति। उपपन्नं चैतत्, नोचेदनुमातिरेकपातः, यद्येवं, किं तत इति चेत्, मैनमनुमन्स्येवापर्याप्तस्यानतिरेके-णाविज्ञायाथा पूर्व मवस्थानं न सुलभ मिति। चारोह सहृशानु-सारेणैव प्रत्यवरोहेत् सुलभ मितिचैव सङ्क्षेपार्थितस्यार्थ: ॥ ४१ ॥

उक्त होमानन्तरं तद्योगिसाधन 'मर्कपर्णं चात्वाले' प्रक्षिपे-दित्याह— "चर्येति। चात्वालप्रक्षेपस्य कारण माह— "एतद्वा इति। एतस्मिन् काले खलु 'एतेनार्कपर्णेनैतद्धोत्र कर्म करोति'। चतच 'एतद्' पर्णं 'मयान्तं' भवति। तदिद मयान्तं पर्णं कश्चिदपि नाभितिष्ठेत्। तच न किमपि हिनस्थिति। तदेतत् पर्णं मतः करोति व्यवहितं करोति। चात्वालस्य गर्त्तत्वादित्यर्थ:। चथ पुनरपि तचैव प्रक्षेप मुप-पादयति। "यद्वेति। चात्वालाख्याधिष्ठानस्येनाग्नि तच प्रक्षिप्तं तदर्कपर्णं 'एष' चात्वालरूपोऽग्नि: 'मन्दहति' सम्यग् दहति ॥ ४२ ॥

इत्थं शतरुद्रिय होम मभिधायेदानीं तस्य सम्पत्त्यभिधानं प्रतिजानीते। [चथात: सम्पदेवेन सम्पत् सम्पत्ति: केनचित् प्रका-रेण साहृश्य सम्पादनम् ] *। यत: कारणात् कर्मानुष्ठानावसरे सम्पत्तिरनुसन्धातव्या। चत: कारणात् तां सम्पदेवाभिधास्याम इत्यर्थ:। एवकारेणाच होमकरणप्रकारस्य कारणेन विधानं सूचितं सम्पदेव प्रदर्श्यते, न पुनर्होमकरण प्रकार:। तस्य

* बध्यनीचिह्नान्त: प्रदर्शित: पाठो च-पुस्तकमात्रे पठित:।

सर्वस्याभिहितत्वादिति । ता सैव सम्पत्तिः प्रश्नोत्तराभ्यां दर्शयति— "तदाहु इत्यादिना । तत् तत्र शतरुद्रियविषये 'अस्य' यजमानस्य एतच्छतरुद्रियं कथं संवत्सरात्मकं अग्निं प्राप्नोति'। कथं च तेन 'सम्पद्यते' सदृशो भवतीत्याहु र्याज्ञिकाः। एतस्योत्तरं 'षष्टिश्च ह वा' इत्यादि । एतच्छतरुद्रियं षष्ट्युत्तराणि त्रीणि शतानि यजूंषि। पञ्चत्रिंशत् ततः पञ्चत्रिंशदिति। तत्र यानि यानि षष्ट्युत्तराणि त्रीणि च शतानि संवत्सरस्याहान्यपि तावन्ति सम्भवन्ति। ततस्तैः संवत्सरस्याहानि प्राप्नोति। 'अथ यानि त्रिंशत् यजूंषि मासरात्रीणामपि त्रिंशत्त्वात् रात्रीः प्राप्नोति। एवं सति समस्तस्य सर्वस्य संवत्सरस्वभावात् तत्संवत्सरात्मकत्वात् उभयात् संवत्सरस्याप्यहोरात्राण्याप्नोति । अथावशिष्टानि यानि पञ्चत्रिंशद्विद्यन्ते तानि त्रयोदशो मासः स चाधिको मासः संवत्सरस्यात्मा मध्यभागः द्वे यजुषी पादौ प्रतिष्ठाशब्देन पादावुच्येते पुनर्द्वे यजुषी प्राणा इन्द्रियाणि यद्यपि ते प्राणा बहव स्तथापि यानि * पञ्चत्रिंशद्दिनाधिक † मासस्य संवत्सरान्तःपातित्व मभिदधत् तन्मासात्मकेन पञ्चत्रिंशता संवत्सरः करचरणादि-विशिष्ट पुरुषकारतया प्रदर्श्यते। "एतावानिति। एतत् प्रमा-णकः खलु संवत्सरः। एवं च सति संवत्सरे यावती सङ्ख्यास्ति शतरुद्रियेऽपि तावती सङ्ख्या विद्यत इति संख्याद्वारा शतरुद्रियं संवत्सर मग्नि माप्नोति तेन च सदृशो भवति। "एतावत्य

* 'यानि' ।--इति क. ख. ग।

† 'पञ्चत्रिंशत्रिंशद्दिनाधिक०'--इति ग

उभया इत्यादिकस्याय मर्थः --- 'शारीष्ठले' शारीष्ठलशब्देऽस्मिन् 'चम्नौ' (स्मिन) 'मध्यतो' मध्यप्रदेशे एतावन्तः चत्पुरुरशतवय-सङ्ख्याका इष्टका सम्यगन्य उपधीयन्ते। इयं च परिगणनो-त्तरस्मिन् काण्डे विधास्यते। इष्टकाणामन्यवयवत्वात् पृथगेवा ऽन्वयः। एवञ्च सति सङ्ख्यासामान्यात् शतरुद्रियेष्टकाऽरूपा चन्वयः पृथगेवाङ्गता भवन्तीति ॥ ४१ ॥

अथ प्रकारान्तरेणापि शतरुद्रियस्य सम्पत्तिः प्रशोत्तराभ्या माह -"तदाहु इत्यादिना। 'महदुक्थ मिति' प्रयत्नाजतमाह-व्यपदेशं (१)* शस्त्रात्मनाऽनुशंसनीयं स्तोत्रं पक्ष्याकारं भवति। तच पञ्चविंशस्तोम चात्माभागः चतयाऽत्रापि चशीतीना मभितोविद्य मानानि यानि (१ तानि) पञ्चविंशति यजूंषि तान्येव महदुक्थ पञ्चविंश स्तोमात्मक चात्मभागः। यद्यपात्र पक्षाकारता स्तो-त्रस्यैवेति चात्मभाग इत्यपि तत्रैव तथापि तदनुशंसनात्मक शस्त्र मभेदेनोच्यते। यथात्मा भवति तथैव शिरः पक्ष पुच्छा नौत्यतानि भवन्ति। चात्मभागादेव तेषां सर्वेषा मुत्पत्तेः चात्मभागे तानि सर्वाण्यन्तर्भूतानि। चात्मभागसम्पादना † देव शिरः प्रभृतान्यपि संगृहीतानि भवन्तीत्यर्थः। चयातः शतरुद्रिये या चशीतयो भवन्ति ताभि र्महदुक्थस्याशीतिभि र्व्याख्याता, तत् सम्बन्धिनीना मशीतीना माप्ति र्भवति।

अथ शतरुद्रिये चशीतिभ्यो य देवाः सन्त जात मस्ति

---

* "महाव्रत इत्युच्यते महत्स्य व्यपदेशः" इति ञ।

† 'आत्मभागोऽयं यद्गत।' इति भ, ग।

मण्डूकस्थत्यां योनिश्च जहुं यथो यदेव मन्त्र आतं तदेव भवति। तेन तस्य इत्यर्थः,— षद् इति मण्डूकथात् परं मन्त्र आतं तुचिताः परामृश्यते। एव मुक्त प्रकारेण शतपथिये विधमानेन तेन तेन भागेन मण्डलि ·उक्थे विधमानस्य तस्य तस्य वाङ्मयामितः शतपथियं मण्डूकस्य माप्नोति तथा मण्डतोक्थेन सम्पद्यते ॥ ४४ ॥ १ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
नवमकाण्डे प्रथमेऽध्याये प्रथमं ब्राह्मणम् ॥

---

॥ अथ द्वितीयं ब्राह्मणम् ॥



अथैन मतः परिषिञ्चति । एतद्वा ऽएनं देवाः शतरुद्रियेण शमयित्वाथैन मेतद्भूय एवाशमयंस्तथै-वैन मेव मेतच्छतरुद्रियेण शमयित्वाथैन मेतद्भूय एव शमयति ॥ १ ॥

अद्भिः परिषिञ्चति । शान्तिर्व्वा ऽआपः शमयत्येवैन मेतत् सर्व्वतः परिषिञ्चति सर्व्वत एवैन मेतच्छमयति त्रिष्कृत्वः परिषिञ्चति त्रिवृदग्निर्यावा-नग्निर्यावत्यस्य मात्रा तावतैवैन मेतच्छमयति ॥ २ ॥

यद्वेवैन परिषिञ्चति । इमे वै लोका एषो ऽग्निरिमांस्तल्लोकानद्भिः परितनोति समुद्रेण हैमां-स्तत् परितनोति सर्व्वतस्तस्मादिमांल्लोकान्त्सर्व्वतः समुद्रः पर्य्येति दक्षिणावृत्तस्मादिमांल्लोकान् दक्षिणा-वृत् समुद्रः पर्य्येति ॥ ३ ॥

अग्नीत्परिषिञ्चति । अग्निरेष यदाग्नीध्रो नो वा ऽआत्मात्मानꣳ हिनस्त्यहिꣳसाया ऽअश्मनो ऽध्य-

म्मतो ह्यापः प्रभवन्ति निकक्षान्निकक्षाद्ध्यापः प्रभवन्ति दक्षिणान्निकक्षाद्दक्षिणाद्धि निकक्षादापः प्रभवन्ति * ॥ ४ ॥

अश्मन्नूर्जं पर्व्वते शिश्रियाणा मिति + । अश्मनि वा ऽएषोर्क्पर्व्वतेषु श्रिता यदापोऽद्भ्यो ह्योषधीभ्यो व्वनस्पतिभ्यो ऽध्यधि सम्भृतं पय इत्येतस्माद्ध्येतत् सर्व्वस्मादधि सम्भृतं पयस्तां न इषमूर्जं धत्त मरुतः सᳪरराणा इति मरुतो वै व्वर्षस्येशते ऽस्मंस्त इदिति निदधाति तदश्मनि क्षुधं दधाति तस्मादश्मानाद्यो ऽथो स्थिरो वा ऽअश्मा स्थिरा क्षुत्स्थिर ऽएव तत् स्थिरं दधाति मयि त ऽऊर्गित्यपादत्ते तदात्मन्नूर्जं धत्त तथा द्वितीयं तथा तृतीयम् ॥ ५ ॥

निधायोदहरणं त्रिर्व्विपल्ययते । एतद्वा ऽएन मेतत्क्षपयतीव यदेनᳪ समन्तं पर्य्येति तस्मा ऽएवैतन्निह्नुते ऽहिᳪसायै ॥ ६ ॥

यद्देव व्विपल्ययते । एतद्वा ऽएन मेतदन्ववैति

* 'प्रभवन्ति' इति ख । + 'मिति'-इति ख ।

तत एवैतदात्मान मपोद्धरति जीवात्वै तथो ह्यनेना-
त्मना सर्व्वमायुरेति ॥ ७ ॥

त्रिर्व्विपल्ययते । त्रिर्हि कृत्वः पर्य्येति यद्यावत् कृत्वः पर्य्येति तावत् कृत्वो व्विपल्ययते * ॥ ८ ॥

अथ तमश्मान मुदहरणा ऽवधाय । एतां दिशᳪ हरन्त्येषा वै नैर्ऋती दिङ्नैर्ऋत्या मेव तद्दिशि शुचं दधाति ॥ ९ ॥

एतद्वा ऽएनं देवाः । शतरुद्रियेण चाग्निना शमयित्वाथाश्यैतेन शुचं पाप्मान मपाघ्नंस्तथैवैन मयमेतच्छतरुद्रियेण चाग्निना शमयित्वाथाश्यैतेन शुचं पाप्मान मपहन्ति ॥ १० ॥

बाह्येनाग्निᳪ हरति । इमे वै लोका ऽएषो ऽग्निरेभ्यस्तल्लोकेभ्यो बहिर्धा शुचं दधाति बहिर्व्वेदीयं वै वेदिरस्यै तद्बहिर्धा शुचं दधाति † ॥ ११ ॥

स व्वेदेर्द्दक्षिणायाᳪ श्रोणौ । प्राङ् तिष्ठन्

* 'व्विपल्ययते' इति क, ख ।

† 'दधाति' इति क ।

दक्षिणा निरस्यति यं द्विष्मस्तं ते मृगच्छन्त्विति च मेव द्वेष्टि त मस्य मृगच्छत्वमुं ते मृगच्छत्विति च ब्रूयाद्यं द्विष्यात्ततो ह तस्मिन्न पुनरस्त्यपि तन्नाद्रियेत स्वयंनिर्दिष्टो ह्येव स यमेवंविद्द्वेष्टि यदि न भिद्येत भेत्तवै ब्रूयाद्यदा ह्येव स भिद्यतेऽथ तं मृगच्छति यं द्वेष्ट्यप्रतीच मायन्त्यप्रतीच मेव तच्छुचं पाप्मानं जहाति * ॥ १२ ॥

प्रत्येत्येष्टका धेनूः कुरुते। एतद्वा ऽएनं देवाः शतरुद्रियेण चाग्निश्च शमयित्वा शुच मस्य पाप्मान मपहत्य प्रत्येत्येष्टका धेनूरकुर्वत तथैवैन मय मेतच्छतरुद्रियेण चाग्निश्च शमयित्वा शुच मस्य पाप्मान मपहत्य प्रत्येत्येष्टका धेनूः कुरुते ॥ १३ ॥

आसीनः कुर्वीतेत्यु हैक ऽआहुः। आसीनो वै धेनुं दोग्धीति तिष्ठंस्त्वेव कुर्वीतेमे वै लोका एषो ऽग्निस्तिष्ठन्तीव वा ऽइमे लोका अथो तिष्ठन्वै वीर्य्यवत्तरः ॥ १४ ॥

* 'जुहोति' (?). – इति क ।

उदङ् प्राङ् तिष्ठन् । पुरस्ताद्वा ऽएषा प्रतीची यजमानं धेनुरुपतिष्ठते दक्षिणतो वै प्रतीचीं धेनुं तिष्ठन्तीमुपसीदन्ति ॥ १५ ॥

स यत्राभ्याप्नोति । तदभिमृश्यैतद्यजुर्जपतीमा मे ऽअग्न ऽइष्टका धेनवः सन्त्वित्यग्निर्ह्येतासां धेनु-करणस्येष्टे तस्मादेतावतीनां देवतानामग्निमेवा-मन्त्रयत ऽएका च दश चान्तश्च परार्धश्चेत्येष ह्याव-रार्ध्यो भूमा यदेका च दश चाथैष परार्ध्यो भूमा यदन्तश्च परार्धश्चावरार्धतश्चैवैना एतत् परार्धतश्च परिगृह्य देवा धेनूरकुर्वत तथैवैना अयमेतदव-रार्धतश्चैव परार्धतश्च परिगृह्य धेनूः कुरुते तस्मा-दपि नाद्रियेत बह्वीः कर्तुं मन्त्रेण वा ऽएष एता ब्राह्मणेन यजुषा बह्वीः कुरुते ऽथ यत् सन्तनोति कामानेव तत् सन्तनोति ॥ १६ ॥

यद्वेवेष्टका धेनूः कुरुते * । व्यामा ऽअस्य सञ्चि-त्यायां हि चितः स यदाहैका च दश चान्तश्च

* 'कुरुतं' इति ग. घ ।

परार्द्धेति व्यामो वा ऽएषा व्यामद्ध व्यामन्तो वाक्-परार्द्ध्यो व्याम मेव तद्देवा धेनु मकुर्व्वत तथैवैतद्यज-मानो व्याम मेव धेनुं कुरुते ऽथ यत् सन्तनोति व्याम मेव तत् सन्तनोत्येता मे ऽअग्न ऽइष्टका धेनवः सन्त्व मुत्रा मुष्मिंल्लोक ऽइत्येतद्वा ऽएना अस्मिंल्लोके धेनूः कुरुते ऽथैना एतद मुष्मिंल्लोके धेनूः कुरुते तथो हैन मेता उभयोर्ल्लोकयोर्भुञ्जन्त्यस्मिंश्चा मुष्मिंश्च। ॥ १७ ॥

ऋतव स्थेति। ऋतवो ह्येता ऽऋतावृध ऽइति सत्यावृध ऽइत्येतदृतुष्ठा स्थ ऽऋतावृध ऽइत्यहोरात्राणि वा ऽइष्टका ऽऋतुषु वा ऽअहोरात्राणि तिष्ठन्ति घृतश्चुतो मधुश्चुत ऽइति तदेना घृतश्चुतश्च मधुश्चुतश्च कुरुते ॥ १८ ॥

व्विराजो नामेति। एतद्वै देवा एता दृष्ट्वा कामभिरूपाश्रयन्त यथा यथैना एतदाचक्षते ता एनानभ्युपावर्त्तन्ताय लोकम्पृणा एव पराच्यस्तस्थुर्-चितनाम्न्यो निमे मित्यस्ता व्विराजो नामाकुर्व्वत

ता एनानभ्युपावर्त्तन्त तस्मादिय इष्टका ऽउपधाय लोकम्पृणयाभिमन्त्रयते तदेना ब्विराजः कुरुते इष्टकावरा हि ब्विराट् कामदुघा ऽपच्यीयमाणा ऽइति तदेनाः कामदुघा अपच्यीयमाणाः कुरुते * ॥ १९ ॥

अथैनं ब्विकर्षति । मण्डूकेनावकया व्वेतस-शाखयैतद्वा ऽएन देवाः शतरुद्रियेण शान्त्वा शम-यित्वा ऽथ मस्य पाप्मान मपहत्याथैन+ मेतद्रूप एव शमयति‡ सर्व्वतो विकर्षति सर्व्वत एवैन मेतच्छ-मयति ॥ २० ॥

यद्वेवैनं ब्विकर्षति । एतद्वै यत्रैतं प्राणा ऋष-योऽग्रे ऽग्निᳬ समस्कुर्व्वंस्त मद्भिरवोक्षंस्ता आपः सम-स्कन्दंस्ते मण्डूका अभवन् ॥ २१ ॥

ताः प्रजापति मब्रुवन् । यद्वै नः कमभूदवाक्-

---

* 'कुरुते' इति ख ।

† 'मपहत्याथैन' इति ग, घ ।

‡ "शमयंस्तथैवैन मथ मेतच्छतरुद्रियेण शान्त्वा शमयित्वा ऽथ मस्य पाप्मान मपहत्याथैन मेतद्रूप ऽएव शमयति" इत्यत्राधिको पाठः क ख, छ पुस्तकेषु ।

दगादिति सोऽब्रवीदेष वा ऽएतस्य व्वनस्पतिर्व्वेत्विति व्वेत्तु संवेत्तु सोऽयं वै तं व्वेतस ऽइत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवा ऽअथ यदब्रुवन्नवाङ्नः क्षमगादिति ता ऽअवाका ऽअभवन्नवाका ह वै ता ऽअवका ऽइत्याचक्षते परोऽक्षं परोऽक्षकामा हि देवास्ता हैतास्वप्स्व ऽआपो यन् मण्डूको ऽवका व्वेतसशाखैताभिर्हैवैन मेतत् त्रयीभिरद्भिः शमयति ॥ २२ ॥

यद्वेवैनं व्विकर्षति । आयत ऽएष ऽएतज्जायते स ऽएष सर्व्वस्मा ऽअन्नाय जायते सर्व्वं व्वेतदन्नं यन् मण्डूको ऽवका व्वेतसशाखा पशवश्च ह्येता ऽआपश्च व्वनस्पतयश्च सर्व्वेणैवैन मेतदन्नेन प्रीणाति ॥ २३ ॥

मण्डूकेन पशूनाम् * । तस्मान् मण्डूकः पशूना मनुपजीवनीयतमो यातयामा हि सो ऽवकाभिरपां तस्मादवका ऽअपा मनुपजीवनीयतमा यातयाम्न्यो हि ता व्वेतसेन व्वनस्पतीनां तस्माद्वेतसो व्वनस्पतीना मनुपजीवनीयतमो यातयामा हि सः ॥ २४ ॥

* 'पशूनाम्' इति ग, क।

तानि व्यपृथ प्रसध्य। दक्षिणार्द्धमाग्नेरन्तरेण परिश्रित: प्रागग्रं विकर्षति समुद्रस्य त्वावकयाग्ने परिव्ययामसि पावको ऽअस्मभ्यं शिवो भवति समुद्रियाभिरद्भि: शमयाम इत्येतत् * ॥ २५ ॥

अथ अवमार्द्धेनोदक्। हिमस्य त्वा जरायु-णाग्ने परिव्ययामसि पावको ऽअस्मभ्यं शिवो भवेति यद्वै शीतस्य प्रशीतं तद्धिमस्य जरायु शीतस्य त्वा प्रशीतेन शमयाम इत्येतत् † ॥ २६ ॥

अथोत्तरार्द्धेन प्राक् ‡। उप ज्मन्नुप वेतसे ऽवतर नदीष्वा § अग्ने पित्तमपामसि मण्डूकि ताभिरागहि सेम न्नो यज्ञं पावकवर्णं शिवं कृधीति यथैव यजुस्तथा बन्धु: ॥ २७ ॥

अथ पूर्वार्द्धेन दक्षिणा ‖। अपा मिदं न्ययनं समुद्रस्य निवेशनम् अन्यांस्ते ऽअस्मत्तपन्तु हेतय:

---

*, † 'इत्येतत'– इति ग, घ।

‡ 'प्राक्'—इति ग, घ।

§ 'नदीष्वा'—इति ग, 'नदीष्वा'—इति घ

‖ 'दक्षिणा'—इति ग, दक्षिणा' इति घ

पावको ऽस्मभ्यꣳ शिवो भवति यथैव यजुस्तथा बन्धुरित्यग्रे त्रिकर्षत्यथेति चयेत्यथेति तद्दक्षिणावृत्तद्धि देवत्रा * ॥ २८ ॥

आत्मान मग्रे विकर्षति । आत्मा ह्येवाग्रे सम्भवतः सम्भवत्यथ दक्षिणं पक्षमथ पुच्छमथोत्तरं तद्दक्षिणावृत्तद्धि देवत्रा † ॥ २९ ॥

अभ्यात्मं पक्षपुच्छानि त्रिकर्षति । अभ्यात्ममेव तच्छान्तिं धत्ते परस्तादर्वाक्परस्तादेव तदर्वाचीꣳ शान्तिं धत्तेऽग्ने पावक रोचिषेति दक्षिणं पक्षꣳ स नः पावक दीदिव इति पुच्छं पावकया यश्चितयन्त्या कृपेत्युत्तरं पावकं पावकमिति यद्वै शिवꣳ शान्तं तत् पावकꣳ शमयत्येवैन मेतत् ॥ ॥ ३० ॥

सप्तभिर्विकर्षति । सप्तचितिकोऽग्निः सप्तऽर्तवः संवत्सरः संवत्सरो ऽग्निर्यावानग्निर्यावत्यस्य

* 'देवत्रा' इति ग, घ ।

† 'देवत्रा' इति ग, 'देवत्रा'—इति घ ।

माधा तावतैवैन मेतद्विकर्षति तं व्यᳬष्य मुत्करे-
न्यस्य * ॥ ३१ ॥

अर्द्धेनᳬ सामभिः परिगायति †। अत्रैष सर्व्वो-
ऽग्निः संस्कृतस्तस्मिन् देवा एतदमृतᳬ रूप मुत्तम
मदधुस्तथैवास्मिन्नय मेतदमृतᳬ रूप मुत्तमं दधाति
सामानि भवन्ति प्राणा वै सामान्य मृतमु वै
प्राणा अमृत मेवास्मिन्नेतद्रूप मुत्तमं दधाति सर्व्वतः
परिगायति सर्व्वत एवास्मिन्नेतदमृतᳬ रूप मुत्तमं
दधाति ॥ ३२ ॥

यद्वेवैनᳬ सामभिः परिगायति। एतद्वै देवा
अकामयन्तानस्थिक मिम ममृत मात्मानं कुर्व्वीमही-
ति त ऽब्रुवन्नुप तज्जानीत यथेम मात्मान मनस्थि-
क ममृतं करवामहा ऽइति ते ऽब्रुवंश्चेतयध्व मिति
चिति मिच्छतेति वाव तदब्रुवंस्तदिच्छत यथेम-
मात्मान मनस्थिक ममृतं करवामहा ऽइति ॥ ३३ ॥

---

* 'न्यस्य'—इति क, 'न्यस्य'-इति ख, न्यस्य'-इति ग, ङ।

† 'परिगायति'-इति क।

ते चेतयमानाः। एतानि सामान्यपश्यंस्तैरेनं पर्यगायंस्तैरेत मात्मान मनस्थिक ममृत मकुर्वंत तथैवैतद्यजमानो यदेनꣳ सामभिः परिगायत्येत मेवैतदात्मान मनस्थिक ममृतं कुरुते सर्व्वतः परिगायति सर्व्वत ऽएवैनदेत मात्मान मनस्थिक ममृतं कुरुते तिष्ठन् गायति तिष्ठन्तीव वा ऽइमे लोका ऽअथो तिष्ठन्वै वीर्य्यवत्तरो हिङ्कृत्य गायति तत्र हि सर्व्वं कृत्स्नꣳ साम भवति ॥ ३४ ॥

गायत्रं पुरस्ताद्गायति। अग्निर्वै गायत्र मग्नि मेवास्यैतच्छिरः करोत्यथो शिर एवास्यैतदनस्थिक ममृतं करोति ॥ ३५ ॥

रथन्तरं दक्षिणे पक्षे। इयं वै रथन्तर मियमु वा ऽएषां लोकानाꣳ रसतमो ऽस्याꣳ ही मे सर्व्वे रसा रसन्तमꣳ ह वै तद्रथन्तर मित्याचक्षते परो-ऽक्षं परोऽक्षकामा हि देवा इमा मेवास्यैतद्दक्षिणं पक्षं करोत्यथो दक्षिण मेवास्यैतत्पक्ष मनस्थिक ममृतं करोति ॥ ३६ ॥

बृहदुत्तरे पक्षे *। द्यौर्वै बृहद् द्यौर्हि बर्हिष्ठा दिव मेवास्यैतदुत्तरं पक्षं करोत्यथो ऽउत्तर मेवास्यैतत् पक्ष मनस्थिक ममृतं करोति ॥ ३७ ॥

वामदेव्य मात्मन्। प्राणो वै वामदेव्यं वायुरु प्राणः सर्व्वेषा मु ह्येष देवाना मात्मा यद्वायुर्व्वायुमेवास्यैतदात्मानं करोत्यथो ऽआत्मान मेवास्यैतदनस्थिक ममृतं करोति ॥ ३८ ॥

यज्ञायज्ञियं पुच्छम्। चन्द्रमा वै यज्ञायज्ञियं यो हि कश्च यज्ञः सन्तिष्ठत ऽएत मेव तस्याहुतीनाꣳ रसोऽप्येति तद्यदेतं यज्ञो-यज्ञो ऽप्येति तस्माच्चन्द्रमा यज्ञायज्ञियं चन्द्रमस मेवास्यैतत् पुच्छं करोत्यथो पुच्छमेवास्यैतदनस्थिक ममृतं करोति † ॥ ३९ ॥

अथ प्रजापतेर्हृदयं गायति। असौ वा ऽआदित्यो हृदयꣳ श्लक्ष्ण एष श्लक्ष्णꣳ हृदयं परिमण्डल एष परिमण्डलꣳ हृदय मात्मन् गायत्या-

* 'पक्षे'—इति म, 'पक्षे'—इति च।

† 'करोति'—इति ख।

स्मात् हि हृदयं निकृत्तं निकृत्तं हि हृदयं दक्षिणा निकृत्तेऽतो हि हृदयं नेदीय आदित्य मेवास्यैतद्धृदयं करोत्यथो हृदय मेवास्यैतदनस्थिक ममृतं करोति ॥ ४० ॥

प्रजाम् च प्रजापतौ च गायति । तद्यत् प्रजाम् गायति तत् प्रजाम् हृदयं दधात्यथ यत् प्रजापतौ गायति तदग्नौ हृदयं दधाति ॥ ४१ ॥

अग्नौ च प्रजाम् च प्रजापतौ च गायति । अयं वा अग्निः प्रजाश्च प्रजापतिश्च तद्यदग्नौ गायति तदेव प्रजाम् च प्रजापतौ च हृदयं दधाति ॥ ४२ ॥

ता एता अमृतेष्टकाः*। ता उत्तमा उपदधात्यमृतं तदस्य सर्वस्योत्तमं दधाति तस्मादस्य सर्वस्यामृत मुत्तमं नान्यो ऽध्वर्योर्गायेदिष्टका वा ऽएता श्चिचिता ह स्याद्यदन्यो ऽध्वर्योर्गायेत् ॥ ४३ ॥ २ ॥

॥ इति प्रथमप्रपाठके द्वितीयं ब्राह्मणम् ॥

* 'अमृतेष्टकाः' – इति ग. घ.

पूर्वस्मिन् ब्राह्मणे शतरुद्रीयहोमोऽभिहितः अथाग्निमग्नौ परिषेकमनुकरणात्रिकर्षणादिकं कर्माभिधास्यते। कात्यायनः, — "त्रिरेनं परिषिञ्चत्यग्नेर्दक्षिणे निकृत्ताऽद्रिं कृत्वाश्मन्नूर्जमित्यद्भिरद्भिः" * इति आग्नीध्रो दक्षिणकक्षप्रदेशे पाषाणं निधाय "अश्मन्नूर्ज" †मिति मन्त्रेण पाषाणस्योपरि आरभ्याग्निं परिषिञ्चतीति सूत्रार्थः तं सेकं परिषेकं विधत्ते "अथैनम्" इति। यतः कारणात् सञ्चितोऽग्निः रुद्ररूपत्वादशान्तः अत एनं शान्त्यर्थं परिषिञ्चेत् तत् चात्र सञ्चितस्याग्नेः रुद्ररूपत्वेनाशान्तस्य शान्त्यर्थमेव शतरुद्रीयहोमः। अतएवोक्तं "तस्मा ऽएत द्व। सतभक्षन्तदैवत्य" ‡ इति अतः किमर्थं पुनः शमनाय परिषेकस्य विधानं न हि शान्तः पुनरपि शान्तः स्यात्। न हि भुक्तवान् भोजनमपेक्षत इत्यत आह "एतद्वा" इति। एतद्वै इति देवानां कर्मानुष्ठानानन्तरपरामर्शः। एतस्मिन्नवसरे ते देवा अशान्तमेनमग्निं शतरुद्रियेण शमयित्वाऽधिकेन परिषेकेण भूय एवाधिकमेवाशामयन् अतो यथैव देवा अकुर्वन् तथैवायमपि यजमानः शतरुद्रियेण शान्तमपि पुनरधिकशमनार्थं परिषिञ्चति। अतः अधिकशान्तिकार्यत्वात् परिषेकोऽवश्यं विधेय इति भावः। "अथैनमतः परिषिञ्चति" इति सामान्य विधानात्पय आदिनाऽपि परिषेकः

* का० श्री० सू० १८. ३. १
† वा० सं० १७. १
‡ इतः पुरस्तात् १ अ०, १ क०, पृ० ६, पं० ६

स्यादित्यत आह,— "अग्निरिति। परिषेकस्य शमनार्थत्वादय-स्याग्न्यादिकृतसन्तापशमनक्षमत्वेन शान्तित्वादद्भिः सम्पादितेन परिषेकेणैनं शमयति ॥ १ ॥

"अद्भि" रपि क्वचिदेकपरिषेकसाकल्येन शमनं न सेत्स्यतीत्याह, — "सकृत" इति। सकृत् कृते शास्त्रार्थ इति न्यायेन सकृदपि परिषेके कृते परिषेकविधिश्च इत्यर्थः। स्यादित्यभिप्रेत्य तदावृत्ति संख्यां दर्शयति। 'त्रिः कृत्व' इति। त्रित्वसंख्यस्य कार्त्स्न्येन शमनहेतु इत्याह,— "त्रिवृदग्नि" रिति अथ त मेव परिषेकं प्रकारान्तरेण प्रशंसति ॥ २ ॥

"यद्वेवेम मिति। एष सञ्चितोऽग्निः प्राजापत्यात्मकत्वेन प्रजापतेश्च सर्वलोकहेतुत्वेन तदात्मकत्वात् 'इमे' पृथिव्यादयो-लोकाः खलु अतश्च तादृशस्याग्नेः परिषेकेण इमानेव 'लोकानद्भिः परितनोति' परिवेष्टयति। समुद्रस्यावात्मकत्वादद्भिः परिषेके समुद्रेणैवेनान् लोकान् परिवेष्ठयति। स च परिषेकः 'सर्वतः' सम्पादित इति समुद्रोपीमान् लोकान् सर्वतः (पर्येति पृथिव्याः समुद्रेण वलयत्वात् अन्तरिक्षद्युलोकयोः पृथिव्या मुपरिवर्त्तमानत्वात् पृथिव्यादीन् सर्वान् लोकान् सर्वः समुद्रः पर्यंतीत्युच्यते सर्वतः ) * परिषेकः सव्यावृदपि कर्त्तुं शक्यत इत्यत आह — "दक्षिणावृदिति। अतः प्रादाक्षिण्येक्रमेण परिषेकः सम्पादितः अतः समुद्रोऽपि तथैव पर्येति ॥ ३ ॥

* बन्धनीचिह्नान्तः प्रदर्शितः पाठो क-पुस्तकमात्रे अधिकः।

समाख्याविनियोगादाध्वर्यो: परिषेक प्राप्तापवाद माह ,— “अग्नीदिति । अथ कस्मादध्वर्युपरियागेनाग्नीध्र: परिषिञ्चत्य इत्यचाह * अग्निरेष इति परिषेक्तव्यस्याग्नेरगमनेन नय-त्वादध्वर्यो परिषेक्तरितो † हिंसा सम्भाविता स्यात् अग्नीध्रस्य पुनरग्न्यनवकस्त्वेन आत्मनैवात्मनो हिंसाया असम्भवादहिंसर्थं तस्य परिषव इत्यर्थ:। परिषेकानन्तरे कस्मिन् निकृते कस्मिन् पाषाणं निधाय तत आरभ्यत इत्याह। “अश्मनोधीत्यादिना निकृत: कश्च प्रदेश: तत् सन्धिस्थानं लोकेऽपि पर्वत दण्ड दक्षिणात्पाषाणसन्धिस्थानाद सर्वत स्तेकृत्स्थाने (?) पाषाणं निधाय तत आरभ्य परिषिञ्चेत् इत्यर्थ:। ४ ॥

इत्थं प्रकारं परिषेकं विधाय अथ तत्र मन्त्रं प्रदर्श व्याचष्टे— “अगश्मूर्ज मिति ‡। आप इति यत् ‘एषा पर्वतस्य श्मनि ‘श्रिता ऊर्करस पर्वतेषु पाषाणसन्धिभ्यो य सत्य-अतस्तामश्मन्नूर्ज मित्येषभागो य एवाभिधत्ते । ‘गिरिश्रियणा मिति श्रयति: स्थानवि इयङ देश च रूपम् उपारच ‘वराणा इत्येतदपि निजन्तं पदम्। अद्रा आवदोभ्य इत्यतत् मन्त्र भागपरिपाठ्योर्थ: प्रसिद्ध इत्याह ,— “एतस्माद्धीति ‘पय:’ क्षीरं तच्च अनादिभ्य: सम्भवन्ते इत्येतत् प्रसिद्ध मेव अन्न त्युत वतीभ्यो गोभ्य: समुत्पत्तरिति। ‘तां न इषं इत्यनेन भागो न

* ‘इत्यत आह’—इति ज, भ। इत्यवाह’—इति क, ण।

† ‘चयदध्वर्यो (?) परिषेक्तरि तो (!)’—observed by Dr. Webber.

‡ वा० सं० १७. १ .

मरुतात् , तत् प्रदातृत्वस्य प्रतिपादनात् तेषां तत् प्रेरकत्वेन तदुपपादयति । "मरुतो वा इति मन्त्रस्याय मर्थः,—'पर्वते' अश्मनि 'गिरिश्रयाणां' श्रिता ऊर्जं रसं श्रप इत्यर्थः । ता मूर्ज मद्भ्यः ओषधीभ्यो वनस्पतिभ्यश्च सम्पादितं यथा श्राहरन्ति तस्मात् । हेतु मतः संहराणाः ददाति, सम्यग्दातारो यूयं ता मिष मश्यमाना मूर्जं रसं नोऽस्मभ्यं धत्त सम्पादय ति परिषेकानन्तरं अश्मन्य द्भ्यनेन मन्त्रेण पाषाणि कुम्भं निदध्यात् इत्याह । "अश्मंस्ते क्षुदिति निदधातीति । अश्मनि कुम्भस्य निधाने परिषेकेण शान्तस्य रुद्रस्य क्षुधं पाषाणि निहितवान् भवति इत्याह । तस्मादश्मनि क्षुधं दधाति तस्मादिति । यतोऽश्मनि क्षुन्निहित तस्मा श्मा न भक्षणयः न यदि स धारत्वे न यस्मात्त्वात् नत्वग्निं सर्वभिन्ध्या क्षुधो नि धानं पाषाणयति र स्थानेऽपि कर्त्तव्यं स्यात् । अतस्तदुल्लङ्घननात्रेव कि मिति निहितेति तत्राह, "अथो इति 'अश्मा' कठिनत्वात् 'स्थिरः' तदपि तथा स्थिरादिदानो मुपशान्तादि कालान्तरेऽनुवर्त्तनात् । अतोऽश्मनि क्षुधो निधानो स्थित एव स्थिरं दधाति । अश्म नहितस्य कुम्भस्य पुन मन्त्रेण स्वीकारं विधत्त— "मयि त इति । तत् तेन स्वीकारेण पुरामन्यूर्जं भवामिकाम्यते । पूर्वं क्षुधापगमनार्थं अश्मनि कुम्भे निहितः । तदात्मन्यूर्जोधारणं न सिध्योदिति तदर्थं पुन "स्तथा द्वितीयं तथा तृतीयं इति । तृतीय वा एव स्थाने किं कर्त्तव्य मिति ॥ ५ ॥

तत्राह,—"निधायेति । उदकं क्रियतेऽनेनेति उदहरणं कुम्भः

"उदकस्योदः सञ्ज्ञायाम्" * इत्युदादेशः। तन्निधाय त्रिव र्ं विपल्ययते प्रतिपर्येति। मन्त्रान्तर्थयति त्रिपल्ययत इति। "उपसर्गस्यायतावितिलत्वं" † किमर्थं विपर्यय मित्याह "एतद्वा इति। एतस्मिन्नवसरे खलु एन मग्निं समन्तात्पर्येतीति। यत एतेनैनं लघुयति लघुमिवाचरति अतस्तथा कृते ग्नि हिंस्य-दिति। अहिंसार्थं तस्मा एवाग्नये निह्नुते कृतं तत्पर्यय मप राध मपमार्ष्टीत्यर्थः। लघूय तीति उपमानादाचरतीति इति क्यच् प्रत्ययः ‡। "तस्मा इति। "श्लाघह्नुङ्स्थ दित सम्प्रदान सञ्ज्ञायां चतुर्थी" § इत्यर्थः प्रकारान्तरेणा प विपर्ययणं प्रशंसति॥ ६॥

"यद्देति। प्रदक्षिणप्रकारावसरे तेनाग्नि मनुगतो भवतीति विपर्ययणात्। तत एव जीवनात्मानं पृथक् करोति। तथा सत्ये-नेदानीं भ्रियमाणेन शरीरेणैव 'सर्व मायुः' प्राप्नोति॥ ७॥

विपर्ययणस्य त्रिवारं करणं प्रशंसति,—

त्रिर्विपल्ययत इति॥ ८॥

त्रिवारं पर्येत्य पश्चात् सोऽश्मानं कुम्भं नैरृत्यां दिशि प्रक्षिपेदित्याह,—

"अथेति। "एतां दिशं" नैरृतीं दिशं हस्तेनाभिनीय दर्शयति। "एषा नैरृती' दिगिति विवरणात्॥ ९॥

* पा० सू० ६. ३. ५७।
† पा० सू० ८. २. १९।
‡ पा० सू० ३. १. १०।
§ पा० सू० १. ४. ३४।

"एतद्वा इति। पूर्वं देवा एत मग्निं शतकद्रियेण चाग्निं शमयित्वाथ स्वस्मेरे नोकप्रदेशे प्रक्षेपेण शोक रूपं पाप मवहन्त। अतो यजमानोऽपि तत्र प्रक्षेपेण तथैव कृतवान् भवति ॥ १० ॥

प्रक्षेपानन्तरं हरणावसरे अन्नमाशोभागेन हरेदित्याह.— "बाह्येनाग्निमिति। तथा हरणेन शोकः पृथिव्यादि लोकेभ्यो बहिर्भावितो भवतीत्याह,— "इमे वा इति अग्नेः पृथिव्यादि लोकत्रयात्मकत्वं प्राजापत्यात्मकत्वात् तथैव वेदेरपि बहिर्हरण मभिवदय प्रशंसति। "बहिर्वेदीति ॥ ११ ॥

उक्तप्रकारेण साश्मानं कुम्भकृत्वा 'वेदेर्दक्षिणस्यां श्रोण्यां' 'प्रामुख मुह यं द्विष्म' इत्यनेन मन्त्रेण दक्षिणतो निरस्येदित्याह। स वा इत्यादिना। उक्तं मन्त्रेण निरसने मन्त्रार्थं स्यैव फलतामाह — य मदितिः। अमुं तं गच्छत्वित्यादिकं तु प्रागेव व्याख्यातम्। निरस्तस्य तस्याश्मनो भेदनं कुर्यादिति तदाह। "यदीति। भेतवे भेत्तुं गच्छत्यर्थेत्यादि सूत्रेण तु मर्थे तवै प्रत्ययः। निरसनेनाभिमतस्य तस्य बालोह्नेदनेन कि लभ्यत इति तदाह। यदा भाति अत्र 'यदि न भिद्येत भेत्तवै ब्रूयाद्' इति सामान्येन च तद्भेदनं अश्मविषयं उदकुम्भविषयं इति निर्णयो दृश्यते। अतोऽत्र विचार्यते, कि मेतद् भेदनं कुम्भविषय मश्मविषयं एवेति। किं तावत् प्राप्तं सामर्थ्यात् कुम्भविषय मेतद्भेदनं नाश्मविषयं, कुत एतत् एव मेतद्भेदनं समर्थं भवति। यदि न भिद्येत भेत्त वै ब्रूयादिति।

मद्रोत्व समर्थं मेव न हि तस्य कठिनत्वात् भेदन माशङ्क्यते इति पाठेऽभिधीयते *। अश्मविषय मेतद्भेदनं प्रतिपत्तव्यम् †। न कुम्भ विषयम्। कुत एतत् अर्थवादात् यदा ह्यश्म न भिद्यतेऽथनाए शुगृच्छति। यं द्वेष्टीति ॥ १२ ॥

सा च शुगश्मनि निहिता तदश्मनि क्षुधं ‡ दधातीति। किञ्च चाश्मनिवाक्यभेदनं कुम्भे भेदनए सामर्थ्यादग्निर्वार्थवादाद्वाच्य-त्वाच्चेति धेनुकरणं नाम वक्ष्यमाण मन्त्रजपपूर्वकं धेनुरूपेणानु-सन्धानम् यतरुद्रियादि कुंभनिरसनान्तं कर्मकृत्वा प्रत्येत्य देवैर्धेनुकरणाद्यजमानोऽपि एतेन तथैव कृतवान् भवतीत्याह,— ‘एतद्वा’ इति ॥ १३ ॥

विहितं धेनुकरणं आसीनेन सम्पाद्य मिति केषाञ्चिच्छाखिनां सोपपत्तिकं मतं पूर्वपक्षयितुं दर्शयति। ‘आसीन’ इति स्वमत माह— “तिष्ठंस्त्वेवेति। तिष्ठन्नेव कुर्वीत, न पुनरासीन इत्येवकारेण पूर्व मुपन्यस्तस्य मतस्य निरासः। स्वमते उपपत्ति माह— “इमे वा इति। एवं मग्निरेवाऽग्नि रिति पृथिव्यादयोलोकाः कुतः प्रजापति स्तावत् पृथिव्यादि-लोकहेतुत्वेन तदात्मक एषोऽग्निः प्राजापत्यात्मकः। स यः स प्रजापतिर्व्यस्रंसत मेव स योऽय मग्निश्चीयत इत्युक्तत्वात्। इत्थं प्राजापत्यात्मना अग्नि रिमे लोकाः, लोकाश्चैते तिष्ठ-

---

* का० श्रौ० सू० १८. २. ७।

† वा० सं० १७. १ अ।

‡ ‘एषं’--इति का० श्रौ० सू० १८. २. ८।

मीव जर्ता अवतिष्ठन्त इव। अतश्च पृथिव्यादिलोकत्रया-त्मकस्याग्नेरवयवीभूताना मिष्टकानां धेनुकरणं स्थित्वा सम्पाद्य मित्यर्थः। अपि च लोके तिष्ठन् पुरुषो वीर्यवत्तरो भवति। तस्मादासीनः ततश्च वीर्यवानेव भूत्वा धेनु करोति। यथा धेनवो-ऽभिमतं पयो * दुहन्ति तद्वदेवैता अपिष्टकाः स्वाभिलाषितं दुहन्ति बुध्या धेनुरूपेणानुसन्धानं क्रियते धेनवश्च वीर्यवत्त-रेण जनेन दुह्यमाना भूयः पयो दुहन्ति न पुनर्दुर्बलेन। अतो-ऽत्रापि स्वाभिलषितदोहनार्थं धेनुकरणं वीर्यवता सम्पा-द्यन्तश्च वीर्यवत्त्वं † तिष्ठतः सम्भवतीति तिष्ठन्नेव धेनुः कुर्या-दिति भावः तिष्ठन्नपि कथं तिष्ठन् कुर्यादिति ॥ १४ ॥

तत्राह,— "उदङ् प्राङिति" ऐशानीदिगुच्यते। तदभि-मुखस्तिष्ठन्नित्यर्थः ‡। लोके हि यजमानस्य पूर्वभागे धेनोः प्रत्यङ्मुखतयावस्थानो दोग्धृणाञ्च प्रत्यङ्मुखा यास्तेन दक्षिणभाग उपसदनात् स्वाभिलषितदोहनार्थं इष्टकानां धेनुकरणे तथावस्थान मुचित मित्याह— "पुरस्ताद्वा इति ॥ १५ ॥

प्रक्रान्ते धेनुकरणे स्थानविशेषस्पर्शपूर्वकं मन्त्रं विधत्ते— "स यत्रेति। अग्नेरात्मभागस्योपरि यत्र स्पृष्टु माप्नोति 'तत्' स्थान मभिमृश्य इम' मे अग्न इति मन्त्रं जपेदित्यर्थः। अतएव

* "या'—इति भ।

† 'वीर्यवत्त्वे'—इति ज।

‡ का० श्रौ० सू० १८ २. १०।

कात्यायनः— "प्राञ्चम उपरि प्रापयान्ते जयतीमाम इति * । अत्राश्मन इति अश्व्याश्मभागस्येत्यर्थः। अश्व्यादिष्वतिरिक्तासु बह्वीषु देवतासु सतीष्वपि मन्त्रे अग्नि मेव प्राधान्येन कि मिति सम्बोधयतीत्यत आह,— "अग्निर्हेतासा" मिति " ययव व्यापारे अवयविनः सामर्थ्योपलम्भादिष्टकाना मन्यतयग्रस्येनाग्नि-स्तासां करणे असमर्थ इति भावः मन्त्रे आदा एकाच दशचेति। अवसाने अन्तश्चापरार्द्धश्चेति सङ्ख्याविशेष प्रयोगस्याभिप्राय माह— "एका च दशचेति। य एष परार्द्धो भूमा अपकृष्टं बहुत्वं अवरसङ्ख्यापर मस्तीमाश यापेक्षया दशत्वसङ्ख्या अवरा ततोऽप्यवरा एकच सङ्ख्या ततश्चावरायानाया सङ्ख्याया अभा-वादिति। अतोऽन्तश्च परार्द्धश्चेति यत् एष परार्द्धो भूमा उत्कृष्टं बहुत्वं अधिकसङ्ख्याक शादशशतसहस्रादिसङ्ख्यापेक्षया अन्तस्याधिकत्व ततोऽपि परार्द्धस्याधिकत्वं तत उत्तरस्या अधिकसङ्ख्याया अभावादित्यर्थः एवं न देवान् पून सङ्ख्या भूम्ना अधिक सङ्ख्या भूम्ना च मध्यतः शतादि सङ्ख्याकाः। एताः इष्टकाः परितो गृहीत्वा धेनुरकुर्वत। यत एव तस्मा-दिदानीं यजमानोऽपि एकाचेत्यादिमं मन्त्रपाठेन तद्वदेव परिगृह्य धेनुः कुरुत इति। तन्त्रेवं सति मन्त्रे यत् सङ्ख्याकानां मिष्टकानां धेनूरूपता सम्पाद्यते तत् सङ्ख्याका इष्टकासां धेनवः क्रियन्ते। तथाप्युक्तसङ्ख्यातिक्रमेण तत्सङ्ख्यानुसारात् बह्वाः कर्तृरादृिये-तेत्यर्थः। कथं तर्हीष्टकास्तत्सङ्ख्याका धेनवः सम्पाद्यन्ते

* का० श्रौ० सू० ८, ९, ८

इत्यत आह,— "अमुत्र वा इति। एष यजमानो ऽमु-ष्मिन् लोके उपलक्षण मेतत् इहलोकेऽपि* अनया इष्टका वीर्यवता † तेन यजुर्मन्त्रेणैता इष्टका बह्वी: एकादिपरार्द्धान्त सङ्ख्याका: कुरुते, मन्त्र सामर्थ्यादल्पस्य बहुवचनम् ‡ ॥ १६ ॥

तैत्तिरीयके श्रूयते §,—"धान्यमसि धिनुहि देवान्"-इत्याह। एतस्य यजुषो वीर्येण यावदेका कामयते यावदेका तावदाहुतिः प्रथते न हि तदस्ति यावदेव स्यात् यावज्जुहोतीति मन्त्रे एका च दशेत्यादिनोत्तरोत्तराधिकसङ्ख्यासन्तानस्य फल माह— "अथेति। अथ तदेवेष्टका धेनुकरणं वाग्धेनुकरणात्मना प्रशंसति— "यद्वेति। मन्त्ररूपया वाचितत्वात्। अग्नि-र्वागात्मक: एकत्वादिका अपि सङ्ख्या: वाचा प्रकाश्य-मानत्वात् वागात्मिका: एव भवति। अग्न्यवयवो भूताना मिष्टकाना एकादश चेत्यादि सङ्ख्या प्रकाशनेन मन्त्रेण देवा वाचा मेव धेनु मकुर्वन्। अत इदानोमपि यजमानस्तद्-देव करोति। एकत्वादि सङ्ख्यानां वागात्मकत्वात् उत्तरो-त्तराधिकसङ्ख्यासन्तानेन वाच मेव भूयसी मविच्छिन्नां सम्पा-दितत्वाद्भवतीत्याह— "अथेति। ननु च "इमा मे ‖ अग्न

* 'इहातोकेऽपि'—इति भ।

† 'वीर्यवतेत्यर्थ:'—इति ज, भ ञ।

‡ 'बहुभवनम्'—इति ज भ, ञ।

§ तै० सं० १. १. ६।

‖ वा० सं० १७. २।

इष्टका धेनवः सन्त्वित्यनेनैवैव * धेनुरूपत्वं सम्पादनात्। पुन रपि तदेवैता मे अग्न इत्यादिना सम्पाद्यत इति। पौन-रुक्त्या शङ्का निवारयति। एतद्वा इति इमा मे अग्न इत्येतैनैवा इष्टका अस्मिंल्लोके धेनू करोति। अथैता मे अग्न इत्यनेन अमुष्मिंल्लोके स्वर्गे धेनू करोति अतश्च पृथग्-त्वान्न पुनरुक्ति रितिभावः। इष्टकानां लोकद्वयेऽपि धेनु रूपता सम्पादनस्य फल माह— "अथो इति। तथासति एता इष्टकारूपा धेनवः अस्मिंश्चामुष्मिंश्चेत्युभयोर्लोकयो रप्येनं यज-मानं भुञ्जन्ति पालयन्तीत्यर्थः। भुञ्जन्तीति भुजो नवम इत्यात्मने पदं विधानो अवन निषेधात् परस्मैपदम्। हे अग्ने इमा इष्टका इहलोके एकत्वादि परार्द्धान्त सङ्ख्याविशिष्टा धेनव केवलं हि मिहलोक एव किन्तु हे अग्ने अमुत्रेत्येतत् पदं मन्त्र एव विद्दणोति। अमुष्मिंल्लोक इति तत्रापि एता इष्टका मे धेनवः सन्त्विति मन्त्रस्यार्थः॥ १७॥

अथ तत्रैव मन्त्रान्तरम् प्रदर्शयन् व्याचष्टे— "ऋतव स्थेति †। ऋतवो होति एता इष्टका ऋतव खलु संवत्सरा-त्मकस्याग्ने अवयवत्वादित्यर्थः। अहोरात्राणि वा इष्टका इत्यत्राप्ययमेवाभिप्रायः। ऋतावृध इति छान्दसो दीर्घः; ऋता-वृध इति पुनर्वचन मादरार्थः। स्पष्ट मन्यत्॥ १८॥

---

* 'सन्ति यानेवैव'—इति भ।

† वा० सं० १७. १।

"विराजो नामेत्यादिकण्डिकाया अर्थः — एतस्मिन् काले खलु 'देवाः' यथा 'यथा एता इष्टका आचक्षते' येनाभिरेता इष्टका आचक्षते जना ते रेव ना मभिरेता इष्टका आचक्षते जनाः ते रेव नामभिः स्वय मथाह्वयन्ताम्। ततश्चैता इष्टका एनान् देवान् 'अभ्युपावर्त्तम्' तत् समीप मगमत्। 'अथ लोकम्पृणा एव' अविज्ञितनामत्वात् धेनुरूपतया अस्यर्थं मूर्धं विमृजन्त्यः; पराङ्मुखा एव तस्थुः अन्यासा मिष्टकानां स्वयमातृण्णा रेतः सिग्वियज्ज्योतिरपस्याप्राणभृदित्यादिकानि विद्यन्ते लोकम्पृणानान्तु तथा प्रातिस्विकनामधेयाभावादिष्टकावत् स्वनामानाह्वानेन विमुखा भूत्वा अवस्थिताः * इत्यर्थः। पश्चाद्देवास्ता इष्टका विराजनाम्नो रकुर्वत †। अतः स्वय मपि तत् समीप मगमत्। अतएव तस्मादुपधानावसरेऽपि लोकम्पृणा दशदशोपधाय मन्त्रेणाभिमन्त्रयते एवं च सति विराजो दशाक्षरत्वात् देवा विराजः कृतवान् भवतीति। तस्मात् मन्त्रे लोकम्पृणा उद्दिश्य विराजो नामेति प्रयुक्त मिति ॥ १९ ॥

विशद मन्यत् कृतवस्येत्यादि मन्त्रस्य योजनं यथाश्रुत मेव इष्टकानां धेनुरूपता सम्पादनानन्तरम् "मण्डूकेनावकया वेतसशाखाभिरग्निस्थलस्य विकर्षणं विधत्ते— "अथेति।

* 'वनस्थिरः'—इति ज; 'वनस्थित'—इति भ।

† 'रन्कुर्वत'—इति क।

एतद्वा इत्यादिकस्य सम्बन्धस्तु प्रागेवाभिहितः। विहितं तद्विकर्षणं 'सर्वतः' कर्त्तव्य मित्याह ॥ २० ॥

सर्वत इति सर्वथापि त्रिकर्षणेन शमनमग्नेर्दर्शयति— "यद्देवैन मिति। 'एन' मग्नि मण्डूकादिभि 'र्विकर्षति' इति 'यत्' यत्र एतत् कारणं खल्विति कारणाभिधानं प्रतिज्ञाय 'यत्रैत' मित्यादिना तत् प्रदर्श्यते,— 'अग्रे' पूर्वं यत्र यस्मिन् प्रस्तावे ऋषिशब्दाभिधेयाः 'प्राणा' एत मग्निं समस्कुर्वन् संस्कारप्रकारस्तु षष्ठकाण्डस्यादावुक्तः; तदाति * प्राणास्त मग्नि 'मद्भि' रेवोक्षितवतः ता आपः संस्कृता 'मण्डूका' अभवत् ॥ २१ ॥

ततः प्रजापतिः प्रतिमाऽस्माकं रसो वाग्मादित्यब्रवीत् स प्रजापतिर्व एतस्य 'रसस्य एव' वनस्पति वेत्तु इति अब्रवीत्। तस्येति कर्मार्थे षष्ठी एव इति प्रत्यक्षेण निर्दिष्टम्। 'तं' वनस्पति वेतस इति परोक्षेणाप्याह। यत एव सुक्तं तेन वेतसोऽभूत् खलु 'तं' देवाः परोऽक्षकामत्वा द्वेतस इत्याचक्षते। अथापो यदब्रुवन् अवाक्षदगादिति तस्मात् स रस 'अवाक्का अभवन्'। ताश्च देवताः परोक्षकामत्वादवका इत्याचक्षते। "ता हैता इति। उक्त प्रकारेण 'मण्डूकाः' साक्षादेवापः वेतसोऽपि तद्रसवेदात्मान् अवकास्तुत इमात्मकत्वादिति सर्वेप्येते मण्डूकादयः अवकात्मका इति। ता एता स्त्रिविधा आपः खलु तस्मात्ते रवकर्षणैरेता स्त्रिविधाभिरप्यद्भिरेन मग्निं शमयितवाम् भवति ॥ २२ ॥

---

* 'तद्देते इति ज।'

इत्थं मण्डूकादीनां मृत्युरूपत्वेन शमयनार्थत्वं प्रदर्श्यानेव कृत्स्नात्मरूपेण प्रशंसति,— "यद्वेवेति। पूर्वं ।अस्मिन्निति अनेन विस्रंसनेन परासुः प्रजापति इदानीं अयमनन्तरोक्तेन संस्कारेण प्राणादीनां निधानात् पुन रुत्पद्यत इति चायमानाग्निलक्षणः प्रजापति जायत एव। जायमानस्य च सर्वान्नभोज्यार्थ मेवोत्पत्तेः ; एषोऽपि सर्वस्मा अन्नाय जायते। मण्डूकादयश्च कृत्स्नं मन्नम। तदेव प्रदर्श्यते,— "पशव श्चैता इति। 'एता मण्डूकावकावेतस शाखाः' * क्रमेण पशव आदौ वनस्पतयश्च भवन्तीति। मण्डूकादयः स्थावरजङ्गमात्मकं कृत्स्नं मन्नं भव प्रदर्श्यते। मण्डूकादयः सर्वे अपि च अन्नात्मकाः। तथापि अवकानाञ्जलेका यत्र नत्वादप्राप्ति वनस्पतिरूपत्वाच्च ता आप इत्युक्तम्। एवञ्च सति मण्डूकादिभिविकर्षणेण एन मग्निं सर्वान्नेन प्रीणातीति ॥ २३ ॥

विकर्षणेन वीतरसान् मण्डूकादयोऽनुपजीवनीयः अस्तित्वाच्च,— "मण्डूकेनेति पशूनाम्। पशूनां मध्ये मण्डूकेन विकृष्टवानिति यत् यस्मात् पशूनां मध्ये मण्डूका गतदारत्वात् पश्वन्तरवदुपकारको न भवतीति। सो अध्वर्यु रुच्यते एव मेवावका अपि मत्ताः पेयावान् भवतीति वेतसोऽपि वनस्पत्यन्तरवत् पुष्पफलादि नोपकारको न भवतीति। एते सर्वे अनुजीवनीयाः अभूवन्नित्यर्थः ॥ २४ ॥

---

* का० श्रौ० सू० १८. २. १०। वा० सं० १७. ६।

मण्डूकादिभिः कथं सम्भवतीति तदुपाय माह— स तानीति सोऽध्वर्युः 'तानि' मण्डूकादीनि 'वंशे प्रबध्य' विकर्षणेनेति शेषः। पूर्वं मग्निस्थलस्य सामान्येन विकर्षण मुक्तम्। यथेनं विकर्षति। सर्वतो विकर्षतीति। तदे-दानीं कस्मिन् कस्मिन् प्रदेशे केन केन प्रकारेणेति विशेष जिज्ञासाया माह ;— "दक्षिणार्द्धेनेति। परिश्रिता मन्तरेणाग्ने-रात्मना भागस्य दक्षिणभागे प्रथमं 'प्राग्' अपवर्गं कर्षति। "समुद्रस्यत्वेवेति * मन्त्रेणेत्यर्थः। दक्षिणार्द्धेनेति व्यत्ययेन तृतीया। समुद्रस्य त्वावकयाग्ने परिव्ययामसीत्यस्य तात्पर्य माह — "समुद्रियाभिस्त्वेति। समुद्रशब्देनाप जलाशय उच्यते। समुद्र सम्बन्धिनीभिरद्भि 'स्त्वां शमयाम' इत्येतदुक्तं भवति। अवकाया अबात्मकत्वात् तया सञ्चरणेन शमनस्य निष्पा-दनादित्यर्थः। "समुद्रियाभिरिति समुद्रा श्वाच † इति प्रत्ययः। तस्य वायनेयी इत्यादि सूत्रेणापि यादेशः। हे 'अग्ने' 'त्वां' समुद्रसम्बन्धिन्या 'अवकया' यदि 'परिव्ययामसि' परितः शब्द गुण: इदन्तो मसि रित्युत्तमपुरुष बहुवचन सकार-स्यान्ते इकारागमः। तेन सञ्चरणेन शान्त स्त्वं 'अस्मभ्यं' अस्म-दर्थं पावयति शोधयतीति 'पावकः' पावयिता 'शिवः' शान्तः आनुकूल्यवान् भवेति मन्त्रस्यार्थः ॥ २५ ॥

* वा० सं० १७. ४।

† पा० सू० ४. ४. ११८।

स्याह। अभ्याक्त मेवेति कथ मभ्याक्तं विकङ्कतं भवतीति; तत्राह परस्तादिति। अथ दक्षिणपश्चादीनां विकर्षणेषु मन्त्रान् विधत्ते,— अग्ने पावक रोचिषेत्यादिना मन्त्रेषु * पावक-शब्दप्रयोगस्याभिप्राय माह— ‘पावकं’ पावक मिति ‘यत्’ खलु वस्तु ‘शिवं’ तस्यैवार्थ प्रदर्शनं ‘शान्त’ मिव तत् ‘पावकं’ भवति। अशान्तस्य शुचि सम्पादकत्वात् अतश्चाग्नेः शान्तता सिद्धये तेन शब्देन सम्बोधन मिति ॥ १० ॥

भाव: विकर्षणे विनियुक्तानां मन्त्राणां सप्तत्वसङ्ख्या प्रशंसति,— “सप्तभि रिति। ‘सप्तचितिकोऽग्नि’ रित्यनेन ‘सप्तर्त्तवः सम्वत्सरः सम्वत्सरोऽग्नि’ रित्यनेन च पृथगेवाग्नेः सप्तसङ्ख्यायोगः प्रदर्श्यते। पञ्च चितयो नित्याः इतरे द्वे चिती नैमित्तिके इति सप्तचितयः अधिमासापेक्षया सप्तर्त्तवः। यस्मिन् वंशे मण्डूकादीनि वत्रा विकृष्टन्तं वंश मुत्करे प्रदक्षिणेदित्याह तं वंश मिति ॥ ११ ॥

अथैन मग्निं परितः सामभि र्गायेदित्याह—“अथेति। विहितं सामगान ममृतरूपतया प्रशंसति। अन्नेव इति। कथ मेतत् साम्ना ममृतरूपत्व मिति, तत्राह— “सामानीति। कर्मात्मके शरीरेषु स्थानाधिकारादि पञ्चभेदविशिष्टत्वात् वा साम्ना प्राणत्वं प्राणश्चामृतं खलु प्राणसम्बन्धे मरणाभावात्। अतश्च प्राण रूपेण साम्नामप्यमृतरूपत्वात् सामगानेना मृत मुत्तमं रूपं मस्मिन्नग्नौ निर्दधातीत्यर्थस्तत्र सामगानं सर्वतः कर्त्तव्य

---

* ऋ० सं० १,७, ८।

मित्याह। "सर्वत इति। यत: पुनस्तदेव सामगानं प्रजापति सम्बन्धिन आत्मन: अनस्थिकामृतरूपत्वसाधनतया प्रवर्त्तति ॥ १२ ॥

"यद्देवेन मिति। एतस्मिन् काले खलु 'देवा' 'इमं प्रजापतिसम्बन्धिन 'आत्मानं' शरीरं 'अनस्थिकमत' एव 'कुर्वीमहीति' अकामयन्त अस्थ्नाविनश्वरत्वेन तद्विशिष्टस्यापि शरीरस्य विनश्वरत्वात् तद्रहितं प्राणशरीरं कर्मलभ्यमित्यर्थ:। तत एते येन प्रकारेण 'ममात्मान मनस्थिकं करवामह' एतत् प्रकार मुपजानीमेत्युक्त्वा पश्चात् कथं तत् प्राप्नोप्य इत्यपेक्षायां "चेतयध्व मित्यब्रुवन्। तद्वाक्यस्य श्रुति स्वय मेव विवृणोति,—"चिति मित्यादिना। 'चितिं' विमर्शमिच्छतेति खलु 'ते अब्रुवन्' एव मपि किमर्थं मब्रुवन् मित्याशङ्क्याह "तदिच्छतेति। तदिति लिङ्गव्यत्यय: येन प्रकारेण 'ममात्मान मनस्थिकं' कुर्वी महि तत् प्रकार परिज्ञाय चितिं मिच्छतेति ब्रुवन्नित्यर्थ: ॥ १३ ॥

पश्चात्ते तथा विचारयमाणा स्तदुपायत्वेन एतानि वक्ष्यमाणानि गायत्र्यादीनि सामानि दृष्टाते रेनं परि-गीयत आत्मानं यथोद्दिष्ट मकुर्वन् अतस्तद्वदेवं यजमानोऽपि कुरुते सर्वत इति। पूर्वादिभागेषु सर्वतो गानेन शरीरं सर्वत: कार्त्स्न्येन मनस्थिक ममृतं करोति। विहितं गान मासीनेन तिष्ठता वाकार्य मिति। तत्र स्वेच्छयान्यतर प्रकारेण तत् प्रसक्तौ नियम माह— "तिष्ठन्निति। तत्र होतृस्थाने

विवरणं ज्ञात्वा मिति। तत्र हिङ्कारे खलु ज्ञात्वं साम भवति। सामान्यरूपेण हिङ्कारे ज्ञत्व मपि सामवर्त्तत इति अनेनैवाभिप्रायेण श्रुत्यन्तरेऽप्युक्तं हिंकरोति। सामैव करोति। अथैनं सामभिः परिगायतीति सामान्येन विधानात् देवविशेषे सामविशेषमान मभिधत्ते ॥ १४ ॥

"गायत्र मित्यादिना। 'तत् सवितुर्वरेण्य' * मित्यष्टाक्षरा गायत्र्या मध्युत्पन्नं साम गायत्रम्। तत् पूर्वभागे गायेत्। एवञ्च गायत्र्या अग्निना सहोत्पन्ने तयोत्पन्नस्यापि साम्नो-ऽग्नित्वादस्य अग्निताखिलस्वरूपस्य प्रजापते रग्नि मेव शिरः प्रदेशस्थात् क्रियास्य शिर एवैतेन सामगानेन 'अनस्थिक ममृतं' करोति ॥ १५ ॥

'अभि त्वा शूरनोनुम' † इत्येतस्या मध्युत्पन्नं साम रथन्तरं तद्दक्षिणपक्षे गायेत्। एवञ्चास्य पृथिवी मेव दक्षिणं पक्षं ज्ञतवान् भवतीति आह— "रथन्तर मित्यादिना अस्याः

---

* गायत्रसाम ;—

तत्सवितुर्वरेण्यम् भर्गो देवस्य धीमहि।

धियो यो नः प्रचोदयात् ॥

—इति उ० ६ प्र० ३ अ० १० सू० १ ऋचि।

† रथन्तरम् :—

अभि त्वा शूर नोनुमो ऽदुग्धा इव धेनवः।

ईशान मस्य जगतः स्वर्दृश मीशान मिन्द्र तस्थुषः ॥

—इति छ० ३ प्र० १ अ० ५ द० १ ऋचि, आ० २प्र० १अ० २१ साम

शीति। "इमे इति। हस्ताभिनयेन दर्शयति। यत इमे सर्वे रसा अस्या भवतिष्ठन्ते। अतोऽतिशयरसाधारत्वेन इयं रसवतः रसतम एव रसंतमः * तच परोक्षकामत्वाद्देवा इत्यन्तर मभिदध इत्यर्थः॥ २६ ॥

'त्वामिद्धि हवाम' † इत्येतस्या मृच्युत्पन्नं साम बृहत्। तदुत्तरे पक्षे गायेत्। तत्रावद्दिव मेवास्योत्तरं पक्षं ज्ञातवान् भवतीत्याह—"बृहदुत्तरे पक्ष इति। 'वर्हिष्ठा' अतिशयेन बृहती बृहच्छब्दादतिशयार्थे इष्टनिटिलोपे च रूपम्॥ २७ ॥

'कयानश्चित्र आभुवद्' ‡ इत्यस्या मृच्युत्पन्नं साम वामदेव्यम्। तदात्मभागि गायेदित्याह। "वामदेव्य मिति। आत्म-

---

* 'रसतमः रसतम एव रसंतमः'—इति क।

† बृहत्साम;—
त्वा मिद्धि हवामहे साती वाजस्य कारवः।
त्वां वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्ववंतः॥
—इति छ० ३प्र० १अ० ५द० ३ ऋचि, आ० ९प्र० १अ० २७ साम।

‡ महावामदेव्यसाम;—
कया नश्चित्र आ भुवदूती सदावृधः सखा।
कया शचिष्ठया वृता॥ १॥
कस्त्वा सत्यो मदानां मंहिष्ठो मत्सदन्धसः।
दृढाचिदारुजे वसु॥ २॥
अभी षु णः सखीना मविता जरितॄणाम्।
शतम्भवास्यूतये॥ ३॥
—इति छ० ३प्र० १अ० १२द० १—३ ऋचा. उ० १प्र० १अ० ५ साम।

भागो वामदेव्यस्य गानेन वायु मेवात्मानं करोतीत्याह। "प्राणो वा इति "सर्वेषा नु हैव देवाना मात्मा यद्वायुरिति। तद्भा: तेषां स्वरूपाभ वादित्यर्थ: ॥ १८ ॥

अथ पुनः 'यज्ञायज्ञीयं' * साम गायेदित्याह,— 'यज्ञायज्ञिय मिति। 'यज्ञा यज्ञा वो ऽग्नय' इत्येतस्या मृच्युत्पन्नं साम यज्ञायज्ञीयम्। यज्ञ यज्ञ शब्दोऽस्मि न्नस्तीति विगृह्य मतोश्छ: सूक्तसाम्नोरिति सामर्थ्यश्छ:। तस्य इयादेश:, अत्र यज्ञायज्ञीय मिति। छान्दसं छान्दसम्। यज्ञायज्ञीयञ्च चन्द्रात्मतां प्रतिजानीते। 'चन्द्रमा वै यज्ञायज्ञीय' मिति। तदेवोपपादयति "यो हि जनेति। 'यज्ञ: सन्तिष्ठते' सम्पूर्णता मिति। तस्याहुतीनाः रसा" एनं चन्द्रमस मितेति। अतएव देवा एत मुपजीवन्ति। अतो यज्ञाहुति रसस्य चन्द्रं प्रति प्राप्तिद्वारा यज्ञायज्ञ: ज्ञाप्य एव यज्ञ: एत मप्येति। तस्मात् 'यज्ञो यज्ञ' एत मेतीति, चन्द्रमा यज्ञायज्ञीय मित्यर्थ: ॥ १९ ॥

अस्तु यज्ञायज्ञीयस्य चन्द्रात्मकत्वम्। तत: किं प्रकृते समायात मिति तु माह— चन्द्रमस मेतेति "प्रजापतेर्हृदय मिति। किञ्चित् साम तदन्वम गायेदित्याह— "अयेति। तत् साम आदित्यात्मना स्तौति। "असौ वा इति। आदित्यस्य हृदय

* यज्ञायज्ञीय साम :—

यज्ञायज्ञा वो अग्नये गिरा गिरा च दक्षसे।
प्र प्र वयममृतं जातवेदसं प्रियं मित्रं न शंसिषम् ॥
—इति छ० १प्र० १अ० ४द० १ ऋचि, गे० १प्र० ७अ० २५ साम।

सादृश्यप्रदर्शनेनोक्तं प्रजापतेर्हृदयसादृश्यं प्रजापतेर्नोक्तं प्रजा-
पतेर्हृदयत्वं उपपादयति । 'सत्य' सत्यम एत इति । गायत्र्या-
दीनां गानस्य स्थान विशेष उक्तः । अथैतस्यात्मं कस्मिन्
स्थाने कर्त्तव्य मिति तत्राह,— 'आत्मन्' इति आत्मभागीति ।
यत्र कश्चित्क्रियत इति तत्राह — "निकाम इति । निकामावप्युभौ
विद्येते इति तत्रान्यतरस्मिन् क्रियतेत्यत आह — "दक्षिणे
निकाम इति । अतोऽस्मान्निकामा हृदयं 'ते दीय उत्पन्न'
सन्निहितं तदीय इत्यस्यान्तिकार्थत्वात्तद्योगे 'दूरान्तिकार्थैः
षष्ठ्यन्यतरस्या' * मिति पक्षे प्रकरणात् पञ्चम्याविधानादत
इति पञ्चमी इत्यं प्रजापते हृदयस्यादित्यात्मकत्वात्तस्य
मानेनादित्य मेवास्य आत्मभागं करोतीत्याह,— "आदित्य
मेवेति ॥ ४ ॥

प्रजापते हृदय गायत्र्यादिसामवत् च कस्यांश्चिदृचि न गीयते ।
अपि तु केवलं प्रजाशब्दे प्रजापतिशब्दे च गीयते अतएव आप-
स्तम्बेन सूचितं,— "प्रजापतेः सामानृचं गायतीति † अतस्तस्य
साम स्तयोः शब्दयोर्गानं प्रशंसति,— "प्रजासु चेति । न च
ता प्रजासु प्रजापता वित्यभिधेय निर्देशः क्रियते नहि तत्र
गानं सम्भवति अशक्यत्वात् तथाय शब्दनिर्देशः । प्रजास्विति
बहुवचनवैयर्थ्यात् । अतः कथ मस्य वचनस्योपपत्तिरिति
नैतदस्ति वाच्यवाचकयोर्भेद विवक्षया वाचकशब्दे क्रियमाणं गानं

* पा० सू० २. ३. ३४ ।

† आप० श्रौ० सू० २ १२. ७ ।

वाच्ये क्रियत इत्युपचर्यते। तथत् 'प्रजासु हृदयं दधाति' अथ यत् प्रजापतौ गायति तदग्नौ हृदयं दधातीति। अभिधेयैकत्वसम्बन्धदर्शनात्तदनुरोधेनाभिधेये एव गायतीति। उपचारोक्तेरभिप्रायः पूर्वं प्रजा प्रजापतिशब्दयो र्गानेन प्रजासु अग्नौ च हृदयं निधीयत इत्युक्तम् ॥ ४१ ॥

अथाग्ने स्तदुभयात्मकत्वात् तत्रैव गाने तत्रोभयत्रापि हृदयं निधीयत इत्याह,— "यद्वेति। प्रजाशब्देन प्रजापतिशब्देन च तस्य गान मग्ना क्रियते। अतश्च पूर्वत्र च्छब्दयाभिधेयप्राधान्ये- नाग्ने रुपसर्जनत्वं मुक्तम्। अत्र तु अग्निप्राधान्येन तच्छब्दद्वया- भिधेयस्योपसर्जनत्व मुच्यत इति विभागः। "अयं वा अग्निः प्रजाश्च प्रजापतिश्चेति। स यः प्रजापतिर्व्यस्रंसतायो मेव 'स योऽय मग्निश्चियत इति श्रुतेः अग्निस्तावत् प्रजाः प्रजापतेश्च सर्वप्रजा निर्मातृत्वेन तदात्मकत्वात्तद्वाराग्निरपि प्रजात्मक इत्यर्थः ॥ ४२ ॥

अथैतानि गायत्र्यादीनि सामानीष्टकारूपेण स्तौति— "ता हैता इति। सामानि भवन्ति प्राणा वै सामान्यमृत मु वै प्राणा अमृत मेवास्मिन्नेव तद्रूप मुत्तमं दधातीति साम्नाम्ना- वद मृतत्वं मुक्त मेव इष्टकानां प्रतिदिश मुपधीयमानत्वा- दुपधानवादो तेषां प्रतिदिशं गानादिष्टकात्वोपचारः। एवञ्च तान्येतानि सामान्यमृतेष्टका भवन्ति। "ता हैता इति स्वर्लि इविशेषेयेष्टका पचे तासेष्टका उत्तमाः सर्वाभ्य इष्टकाभ्यः उपरि प्र उपरि य उपरि इति। तेनास्य हूयमानस्य

सर्वस्याप्यमृत मुत्तमं दधाति। तस्मादस्य सर्वस्य प्रपञ्चस्या मृत मुत्तमं भवति। विहितं सामगानं समाख्यानादुद्गातुः प्राप्नोतीति। तदपवाद माह— "नाध्वर्युरि"ति। इतरस्य गातृत्वे दोष माह— 'इष्टका वा एता इति। एतेषां साम्ना मिष्टकात्वादिष्टकानां चाध्वर्युणोपधेयत्वादितरस्य * गातृत्वे तदुपधानवैधुर्य्येणाध्वर्युर्निर्जितः पराभूतो भवेदित्यर्थः ॥ ४३ ॥ २ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
नवमकाण्डे प्रथमेऽध्याये द्वितीयं ब्राह्मणम् ॥

वेदार्थस्य प्रकाशेन तमो हार्दं निवारयन् ।
पुमर्थांश्चतुरो देयाद् विद्यातीर्थमहेश्वरः ॥ १ ॥

ब्रह्माण्डं गोसहस्रं कनकहयतुलापूरुषौ स्वर्णगर्भम् ,
सप्ताब्धीन् पञ्चसीरीं स्थिदशतरुलताधेनुसौवर्णभूमीः ।
रत्नोस्रां रुक्मवाजिद्विपसहितरथौ सायणिः सिङ्गणार्यो ,
व्यश्राणीद्विश्वचक्रं प्रथितविधिमहाभूतयुक्तं घटञ्च ॥

* 'चाध्वर्युरिति इतरस्य'— इति क, ग

धान्याद्रिं धन्यजन्मा तिलभव मतुलः स्वर्णजं वर्णमुख्यः,
कार्पासीयं कृपावान् गुडकृत मजडो राजतं राजपूज्यः ।
प्राज्योत्थं प्राज्यजन्मा लवणज मतृणः शार्करं चार्कतेजाः,
रत्नाढ्यो रत्नरूपं गिरि मकृत मुदा पापमालिन्यहार्यः * ॥

इति श्रीमद्राजाधिराजपरमेश्वरवैदिकमार्गप्रवर्त्तक-
श्रीहरिहरमहाराजसाम्राज्यधुरन्धरेण
सायणाचार्येण विरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
नवमकाण्डे प्रथमोऽध्यायः समाप्तः ॥ १ ॥

---

* अत्रत्याष्टौ पद्याः पञ्चमकाण्डीयद्वितीयाध्यायान्ते द्रष्टव्याः ।

॥ अथ द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥

---

उपवसथीयेऽहन्प्रातरुदित ऽआदित्ये *। वाचं विसृजते वाचं विसृज्य पञ्चगृहीत माज्यं गृह्णीते तत्र पञ्च हिरण्यशकलान् प्रास्यत्यथैतत् अयꣳ समासिक्तं भवति दधि मधु घृतं पात्र्यां वा स्थाल्यां वोकबिल्या तदुपरिष्टाद्दर्भमुष्टिं निदधाति† ॥ १ ॥

अथाग्नि मारोहति। नमस्ते हरसे शोचिषे नमस्ते ऽअस्त्वर्च्चिष ऽइत्यवैष सर्व्वोऽग्निः संस्कृतः स एषोऽत्र तस्मा ऽअलं यद्धिꣳस्याद्यं जिहिꣳ-सिषेद्य मु वा ऽएष हिनस्ति हरसा वैनꣳ शोचिषा वार्च्चिषा वा हिनस्ति तथो हैन मेष एतैर्न्न हि-नस्त्यन्यांस्ते ऽअस्मत्तपन्तु हेतयः पावको ऽअस्मभ्यꣳ शिवो भवेति यथैव यजुस्तथा बन्धुः ॥ २ ॥

आरुह्याग्निꣳ स्वयमातृण्णां व्याघारयति। आज्येन पञ्चगृहीतेन तस्योक्तो बन्धुः ॥ ३ ॥

---

* 'आदित्ये'—इति ग, घ।

† 'निदधाति'- इति ग, घ।

स्वयमातृण्णां व्याघारयति । प्राणः स्वयमातृण्णा प्राणे तदन्नं दधाति * ॥ ४ ॥

यद्वेव स्वयमातृण्णां व्याघारयति । उत्तरवेदिर्ह्येषाग्नेरथ या ममूं पूर्व्वां व्याघारयत्यध्वरस्य सायं हैषाग्नेस्तामेतद् व्याघारयति ॥ ५ ॥

पश्यन्नेव हिरण्यं व्याघारयति । प्रत्यक्षं वै तद्यत् पश्यति प्रत्यक्षᳪ सोत्तरवेदिः प्राप्ता एवेह भवन्ति परोऽक्षं वै तद्यत् प्राप्ताः परोऽक्ष मिय मुत्तरवेदिः ॥ ६ ॥

स्वाहाकारेण तां व्याघारयति । प्रत्यक्षं वै तद्यत् स्वाहाकारः प्रत्यक्षᳪ सोत्तरवेदिर्व्वषट्कारेणेमां परोऽक्षं वै तद्यद्वषट्कारः परोऽक्ष मिय मुत्तरवेदिराज्येनाज्येन ह्युत्तरवेदिं व्याघारयन्ति पञ्चगृहीतेन पञ्चगृहीतेन ह्युत्तरवेदिं व्याघारयन्ति व्यतिहारं व्यतिहारᳪ ह्युत्तरवेदिं व्याघारयन्ति+ ॥ ७ ॥

---

* 'दधाति'—इति ख ।

+ 'व्याघारयन्ति'—इति ख ।

नृषदे त्वेडिति। प्राणो वै नृषन् मनुष्या नरस्तद्योऽयं मनुष्येषु प्राणो ऽग्निस्त मेतत् प्रीणात्य-प्सुषदे त्वेडिति यो ऽप्स्वग्निस्त मेतत् प्रीणाति बर्हिषदे त्वेडिति य ओषधिष्वग्निस्त मेतत् प्रीणाति वनसदे त्वेडिति यो वनस्पतिष्वग्निस्त मेतत् प्रीणाति स्वर्विदे त्वेडित्यय मग्निः स्वर्विदिम मेवैतदग्निं प्रीणाति ॥ ८ ॥

यद्वेवाह। नृषदे वेडप्सुषदे वेडित्याद्येवैतान्यग्नेर्नामानि तान्येतत् प्रीणाति तानि हविषा देवतां करोति यस्यै वै देवतायै हविर्गृह्यते सा देवता न सा यस्यै न गृह्यतेऽथो ऽएतानेवैतदग्नीनस्मिन्नग्नौ नामग्राहं दधाति ॥ ९ ॥

पञ्चैता आहुतीर्जुहोति। पञ्चचितिकोऽग्निः पञ्चऽर्तवः सम्वत्सरः संवत्सरो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतदन्नेन प्रीणाति* ॥ १० ॥

अथैनं समुक्षति। दध्ना मधुना घृतेन

* 'प्रीणाति' –इति ख।

जायत ऽएष एतदाश्नीयते स एष सर्व्वस्मा ऽअन्नाय आयते सर्व्वम्वेतदन्नं यद्दधि मधु घृतꣳ सर्व्वेणै-वैन मेतदन्नेन प्रीणाति सर्व्वतः समुक्षति सर्व्वत एवैन मेतत् सर्व्वेणान्नेन प्रीणाति ॥ ११ ॥

यद्वेवैनꣳ समुक्षति*। यत्रैष सर्व्वोऽग्निः संस्कृतस्तस्मिन् देवा एतद्रूप मुत्तम मदधुस्तथैवा-स्मिन्नय मेतद्रूप मुत्तमं दधात्यन्नं वै रूप मेतदु परम मन्नं यद्दधि मधु घृतं तद्यदेव परमꣳ रूपं तदस्मिन्नेतदुत्तम दधाति सर्व्वतः समुक्षत्यपि बाह्येन परिश्रितः सर्व्वत एवास्मिन्नेतद्रूप मुत्तमं दधाति दर्भैस्ते हि शुद्धा मेध्या यद्यैरयꣳ हि देवानाम् ॥ १२ ॥

यद्वेवैनꣳ समुक्षति। एतद्वै यत्रैतं प्राणा ऋषयोऽग्रेऽग्निꣳ समस्कुर्व्वꣳस्तदस्मिन्नदोऽमुं पुर-स्ताद् भाग मकुर्व्वताद: सजूरब्दीय मथास्मिन्नेतꣳ संचित ऽउपरिष्टाद् भाग मकुर्व्वत तद्यत् समुक्षति

* 'समुक्षति'-इति ख। 'संमुक्षति'- इति ग।

य ऽएवास्मिंस्ते प्राणा ऋषयः सञ्चित ऽउपरिष्टाद्
भाग मकुर्व्वत तानेवैतत् प्रीणाति दध्ना मधुना
घृतेन तस्योक्तो बन्धुः ॥ १३ ॥

ये देवा देवानाम् । यज्ञिया यज्ञियाना
मिति देवा ह्येते देवानां यज्ञिया उ यज्ञियानाꣳ
संव्वत्सरीण मुप भाग मासत ऽइति संव्वत्सरीणꣳ
ह्येत ऽएतं भाग मुपासते ऽहुतादो हविषो यज्ञे
ऽअस्मिन्नित्यहुतादो हि प्राणाः स्वयं पिबन्तु मधुनो
घृतस्येति स्वय मस्य पिबन्तु मधुनश्च घृतस्य चेत्ये-
तत् * ॥ १४ ॥

ये देवा देवेषु† । अधि देवत्व मायन्निति देवा
ह्येते देवेष्वधि देवत्व मायन्ये ब्रह्मणः पुर ऽएतारो
ऽअस्येत्यय मग्निर्ब्रह्म तस्यैते पुर ऽएतारो येभ्यो न
ऽऋते पवते धाम किञ्चनेति न हि प्राणेभ्य
ऽऋते पवते धाम किञ्चन न ते दिवो न पृथिव्या

* 'चेत्येतत्'— इति ग ।

† 'देवेषु' इति ख, 'देवेषु'— इति ग ।

ऽप्यधि स्तुष्विति नैव त दिवि न पृथिव्यां यदेव प्राणभृत्तस्मिंस्त ऽइत्येतत् * ॥ १५ ॥

द्वाभ्याᳬं समुच्छति। द्विपाद्यजमानो यजमानो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतत् समुच्छति + ॥ १६ ॥

अथ प्रत्यवरोहति। प्राणदा अपानदा ऽइति सर्व्वं हैते प्राणा योऽय मग्निश्चितः स यदेता मत्रा-त्मनः परिदां न वदेतात्र हैवास्यैष प्राणान् वृञ्जी-ताथ यदेता मत्रात्मनः परिदां वदते तथो हास्यैष प्राणान्न वृङ्क्ते प्राणदा अपानदा व्यानदा वर्च्चो-दा वरिवोदा इत्येतद्दा मे ऽसीत्येवैतदाहान्यांस्ते ऽअस्मत्तपन्तु हेतयः पावको ऽअस्मभ्यᳬं शिवो भवेति यथैव यजुस्तथा बन्धुः ‡ ॥ १७ ॥

प्रत्येत्य प्रवर्ग्योपसद्भ्यां प्रचरति। प्रवर्ग्योप-

* 'इत्येतत्'—इति ग, घ।

† 'समुच्छति'—इति ख।

‡ 'बन्धुः'—इति क।

सम्राजं प्रचर्याथास्मै व्रतं वार्हव्रतं वा प्रयच्छ-
त्यथ प्रवर्ग्योपसद्भ्या मथ प्रवर्ग्य मुत्सादयत्याप्त्वा तं
कामं यस्मै कामायैनं प्रवृणक्ति ॥ १८ ॥

तं वै परिष्यन्द ऽउत्सादयेत्। तप्तो वा ऽएष
शुशुचानो भवति तं यदस्या मुत्सादयेदिमा मस्य
शुगृच्छेद्यदप्सूत्सादयेदपोऽस्य शुगृच्छेदथ यत् परि-
ष्यन्द ऽउत्सादयति तथो ह नैवापो हिनस्ति नेमां
यदह्याप्सु न प्राश्यति तेनापो न हिनस्त्यथ यत्
समन्त मापः परियन्ति शान्तिर्वा ऽआपस्तेनो ऽइमां
न हिनस्ति तस्मात् परिष्यन्द ऽउत्सादयेत् ॥
॥ १९ ॥

अग्नौ त्वेवोत्सादयेत्। इमे वै लोका एषो
ऽग्निरापः परिश्रितस्तं यदग्ना ऽउत्सादयति तदे-
वेमं परिष्यन्द ऽउत्सादयति * ॥ २० ॥

यद्वेवाग्ना ऽउत्सादयति। इमे वै लोका एषो
ऽग्निरग्निर्वायुरादित्यस्तदेते प्रवर्ग्याः स यदन्यत्रा-

* 'ऽउत्सादयति' -इति ख।

न्नेऽतस्मादयं देतांस्त्रीदेवान् बहिर्द्धेभ्यो लोकेभ्यो दध्याद्य यदग्ना ऽउत्सादयत्येतानेवैतद्देवानेषु लोकेषु दधाति * ॥ २१ ॥

यद्देवाग्ना ऽउत्सादयति । शिर ऽएतद्यज्ञस्य यत् प्रवर्ग्य ऽआत्माय मग्निश्चितः स यदन्यत्राग्नेऽतस्मादयं बहिर्द्धाग्नाप्छिरो दध्यादथ यदग्ना ऽउत्सादयत्यात्मान मेवास्यैतत् संस्कृत्य शिरः प्रतिदधाति ॥ २२ ॥

स्वयमातृण्णया सᳪंस्पृष्टं प्रथमं प्रवर्ग्य मुत्सादयति । प्राणाः स्वयमातृण्णा शिरः प्रवर्ग्य आत्माय मग्निश्चितः शिरश्च तदात्मानं च प्राणेन सन्तनोति सन्दधात्युत्साद्य प्रवर्ग्यं यथा तस्योत्सादनम् ॥
॥ २३ ॥ ३ ॥

॥ इति प्रथमप्रपाठके तृतीयं ब्राह्मणम् [ २. १. ]

* 'दधाति' - इति ख

॥ श्रीगणेशाय नमः ॥

यस्य निःश्वसितं वेदा यो वेदेभ्योऽखिलं जगत् ।
निर्ममे, तमहं वन्दे विद्यातीर्थमहेश्वरम् ॥ १ ॥

पौर्णमास्यदिवसात् प्राचीने दिवसे कर्त्तव्यं प्रयोग मभिधाय तथा तस्मिन् दिवसे कर्त्तव्य मभिधत्ते । "उपवसथी-येऽहन् इत्यादिना । 'प्रातरुदित आदित्ये वाचं विसृजते' च यजमानः वाचं विसृज्येत् । यत्र पूर्वकाल मात्रे क्त्वा प्रत्ययः स हि तत्र पूर्वोत्तरक्रियायाः समानकर्त्तृत्व मस्ति । यजमानस्य वाग्विसर्जनादध्वर्योराज्यग्रहणादिति प्राप्तो यथावा क्षारा स्थानौ तु पिठरा कारां * उदविन्यां मन्त्रामुखां व्यत्ययेन ङी-प्रत्ययः । "तदुपरिष्टादिति । यत्र प्राच्यां स्थाल्यां वा दध्यादिकं समासिक्तं तदुपरिष्टादित्यर्थः ॥ १ ॥

अथाग्नि मारोहतीति "दर्भमुष्टि निधायानन्तरम् तदाज्यं दध्यादिकं समासिक्तं तदुपरिष्टादादाय "नमस्त † इति मन्त्रेणाग्नि मारोहेत् । अतएव कात्यायनः,— "उभय मादाय चित्यारोहणं नमस्त इति ‡ इति । आरोहणे नमस्त इत्यस्य मन्त्रस्य पूर्वार्द्धस्य पाठे प्रयोजन माह— "अवेषु सर्वोऽग्नि रिति ।

* 'पिठराकाम् (कवि)न्त्यां (?)'—इति ख ।
'पिठरांकां उन्त्यां'—इति भ ।
'पिठ रकां उन्त्यां'—इति अ ।

† वा० सं० १७. ११ ।

‡ का० श्रौ० सू० १८. ३. ५ ।

अत्राग्निश्चयनसमये एषोऽग्निः सर्वः संस्कृतः साकल्येन कृतसंस्कारः अतोऽत्र स एषोऽग्निः यं हन्तुं हिंस्यात् यं जिहिंसिषेत् तस्मै अलं समर्थं हननेच्छयाहननस्य चेत्युभयस्यापि समर्थं स च यं हिनस्ति एनं 'हरसा शोचिषा वा हिनस्ति'। अतश्चास्य मन्त्रभागस्य पाठेन एनं मध्वर्युं एते हरःप्रभृतिभि र्न हिनस्ति। हरं इति हरणसमर्थं तेजः शोच इति शोचनसमर्थं अर्चिरिति दहने प्रशस्तं तेजः। मन्त्रस्य द्वितीयार्थं स्पष्टार्थ मित्याह। अन्यास्ते अस्मदिति हे अग्ने हरसे नमोऽस्तु शोचिषे नमोऽस्तु तथा ते अर्चिषे नमोऽस्तु। अन्यास्ते अन्यात् अस्मत्तोऽन्यान् ते हेतयः हरः प्रभृतय स्तपन्तु। अस्मभ्यन्तु त्वं पावकः शिवश्च भव ॥ २ ॥

अग्निं मारुह्य किं कुर्यादत आह— "आरुह्याग्नि मिति। प्रथम मध्यमोत्तमासु चितिषु तिस्रः स्वयमातृण्णा उपधीयन्ते। तत्र तृतीयायां स्वयमातृण्णायां व्याघारणक्रियाया इष्टत्वात् मध्यमो स्वयमातृण्णा मिति द्वितीया व्याघारणं नाम एकस्मात्कोणात्कोणान्तरं प्रत्याज्यधाराधारणम्। तच्च व्याघारणं पञ्च गृहीतमाज्येन क्रियेतेति * तस्योभयस्य ब्राह्मणं प्रागुक्त मित्याह— "आज्येनेति ॥ ३ ॥

अथ व्याघारणस्य स्वयमातृण्णा धारकत्वं प्रशंसति। स्वयमातृण्णायाः प्राणत्वं सप्तमकाण्डे † ऽभिहितम्। प्राणो वै स्वय-

* का० श्रौ० सू० १८. ३. ६।

† पुरस्तात् ७का० ४अ० २ब्रा० १ कण्डी (पृ० २८३ पं० १६)।

मात्स्वा प्राणोह्येवैतत् स्वयमात्मन आहन्ते इति। अतश्चाग्नि-सम्बन्धिनि प्राणे तदाज्यक्षरणमन्त्रविहितवान् भवति। प्रका-रान्तरेणापि स्वयमातृण्णायां व्याघारण मुपपादयति ॥ ४ ॥

यद्वेवेति। एषा स्वयमातृण्णा अग्ने रुत्तरवेदिः (खलु। अथ या ममुम् बुद्धौ परामर्शं पूर्वा मुत्तरवेदिं व्याघारयति। सा पुनः सोमयागस्य अतोस्यां स्वयमातृण्णायां व्याघारणाय उत्तरवेदिः) * तर्हि तद्व्याघारणे पूर्वोत्तरवेदिवत् ॥ ५ ॥

हिरण्यदर्भमादि † पूर्वकत्वेन भवितव्य मित्यत आह— "पञ्चं स्ववेति। प्रत्यहं सोत्तरवेदिसंयुक्तमन्त्रादि निर्मितत्वा-भावेनोपचारिकोत्तरावदित्वादित्यर्थः ॥ ६ ॥

स्वाहाकारस्य सर्वत्र हविःप्रदानसाधनत्वेन प्रत्यक्ष वैट्-कारस्य ‡ तु तथाभावेन परोक्षत्वं आज्येन पञ्चगृहीतेन व्यतिहार मुत्तरं वेदेर्व्याघारणात् तथैवास्या अपि उत्तर-वेदित्वेन व्याघारण मुपपन्न मित्याह। "आज्येनेत्यादिना। व्यतिहार मित्यनेन पूर्वं दक्षिणांसे व्याघारणं तत उत्तरश्रोणौ पश्चाद्दक्षिणश्रोणौ तत उत्तरांसे तत मध्ये इत्ययं क्रमो विवक्षितः ॥ ७ ॥

अथ क्रमेण मन्त्रान् प्रदर्श्य व्याचष्टे। "तृपदे वेडिति तृपु सीदतीति। तृपत् इति प्राणव्यतिरिक्त मपि वक्तं

---

* 'बध्नीयिताान्तः' प्रदर्शितः पाठो ज-पुस्तकमात्रे नास्ति

† का० श्रौ० सू० १८. ३, ७।

‡ वा० सं० १७. १२।

गच्यत इति विवक्षितोऽर्थो दर्शितः— "प्राणो वै नृषदिति। नृषदित्यत्र नृ-शब्दस्य प्रसिद्ध एवार्थो विवक्षितो नेतर इत्युक्तं मनुष्या नर इति एतन् मन्त्रसाध्यव्याघारणस्य फल मुक्तम्। "तद्योऽय मिति। वेडिति सम्प्रदानार्थीयो निपातः। नृषदे मनुष्येषु वर्त्तमानाय प्राणरूपायाग्नये वेट् इद माज्य-रूपं हविर्दत्त मित्यर्थः। "अय मग्निः स्वर्विदिति। 'अयं' सचितोऽग्निः 'स्वर्वित्' स्वर्गं लभयतीति स्वर्वित् अष्टार्थ मन्यत् ॥ ८ ॥

प्रकारान्तरेण मन्त्राणा मभिधानं प्रशंसति— "यद्वेवाह अप्सुषदे वेडिति * इत्यत्रेति शब्दः प्रकारवाचीनेन बर्हिषदे वेडित्यादीन्यपि संगृहीतानि भवन्ति। एतानि नृषदित्या-दीनि अस्यैव सञ्चिताग्नेर्नामानि अस्य सर्वात्मकत्वेन मनुष्यादि-स्थिताग्न्यात्मकत्वात्। अत एनेन नान्येवनामानि प्रीणित-वान् भवति। न केवलं तेषां प्रीणनं अपि तदेव ताद्र-सम्पत्तिरपीत्याह,— "तानीति। 'यस्यै खलु देवतायै हविर्गृह्यते सा देवता न' भवति। अतोऽत्र नृषदादि नामानि चतुर्थ्यं तान्युच्चार्यहोमविधानात्तदर्थं हविर्ग्रहण मिति हविषा तानि नामानि देवतां कृतवान् भवति। किञ्च नृषदादि शब्दाभि-धेयानाग्निनामयाह मस्मिन् सञ्चितेऽसौ निदधाति ॥ ९ ॥

आहुतीनां पञ्चत्वसङ्ख्याग्नेः कार्त्स्न्येन प्रीति र्भवतीत्याह,—

* का० श्रौ० सू० १८. ३. ६। वा० सं० १७. १२।

"पञ्चैता इति। पञ्चगृहीत माज्यं दध्यादिकञ्चेत्युभय मप्यग्ने-रुपयानीतं तत्राज्यस्य विनियोगोऽभिहित: ॥ १० ॥

अथावशिष्टस्य विनियोग माह— "अथैन मिति। तदु-पयोग माह, "जायत एष इति ॥ ११ ॥

दध्यादीनां बहुत्वात् सर्वांशस्य त्रिहितं तत् समुच्चयं परिश्रिद्भ्यो बहिरपि कर्त्तव्यं मित्याह,— "सर्वत इति *। उपरिष्टाद्दर्भमुष्टिं निदधातीत्युक्तान् दर्भान् समुच्चये विनियुज्य प्रशंसति — "दर्भै रिति। 'अन्नं हि देवाना मिति' हि शब्द: शाखान्तरप्रसिद्धिं द्योतयति। अतएव तैत्तिरीयके श्रूयते,— "यत् पवित्रं तद्देवाना मिति" †। अथ ते दध्यादिभि: समुच्चये मास्मिन् संस्कृतेऽग्नौ उत्तमरूपनिधानं भवतीति प्रशंसति। यद्वेवेति 'एतद्वै रूप' मित्यादिना परमरूपत्व मुपपाद्यते। अन्नस्तावद्रू-पकारणत्वाद् रूपं परमत्वं तु दध्यादीनां रसातिशयवत्त्वादिति दध्यादीनि परमं रूप मित्यर्थ: ॥ १२ ॥

अथ पुनस्तान्येव दध्यादीन्यग्रेरुपरिष्टाद्भागरूपेण प्रशं-सति— "यद्वेवैन मिति। अग्ने पूर्वं 'यत्र' यस्मिन्नवसरे ऋषिशब्दाभिधेया: 'प्राणा' विस्रस्तं प्रजापतिं 'समस्कुर्वन्' तदद: काले 'अद:' शब्दस्तस्य कालस्य विप्रकर्ष मभिधत्ते। 'अमुं भाग' मकुर्वत 'अमु' मित्यपि विप्रकृष्टो भाग उच्यते।

---

* "सर्वत: समुच्चत्यपि बाह्येन परिश्रित इति"—इति का० श्रौ० सू० १८. ३. ८।

† तै० ब्रा० १. ६. ८. ६।

'अमुं भाग' मिति यदुक्तं तदेवाह अतः (!) 'सजूरब्दीय' मिति सजूरब्दो ऽयवोभिरित्येतेन मन्त्रेण प्रतिपादितं होमरूप मच' मन्नाग्निन् सञ्चितेऽग्नौ एवं तं दध्यादिलक्षण मुपरिष्टाद्भाग मकुर्वतानेव प्रीणाति। सञ्चितस्याग्नेः प्राणविग्रहत्वेन प्राण-रूतोऽग्नेर्भागः प्राणाना मपि भवतीति तस्याग्नेरनेनोपरिष्टाद् भागेन 'तानेव' प्राणान् प्रीणितवान् भवतीत्यर्थः। दध्यादि-विषयं ब्राह्मणम् प्रागुक्त मित्याह,— दध्नेति। तच्च सप्तम-काण्डे कूर्मोपधानकथनावसरेऽभिहितम् * ॥ १२ ॥

अथ समुच्चये प्रथमं मन्त्र दर्शयन् व्याचष्टे— "ये देवा देवाना मिति † देवा 'यज्ञियानां' यज्ञार्हाणा मपि यज्ञिय' तत् पूर्व कथ मेव सर्वेषां यज्ञार्हत्वादित्यर्थः द्वितीय तृतीय मादौ प्रसिद्धार्थौ वित्याह 'संवत्सरीणा' मिति। एतस्य समुच्चयस्य संवत्सराद् क्रियमाणत्वादेतत् 'संवत्सरीणो भाग' यतः प्राणादध्यादीनाहुता-न्येषादग्नि यतोऽहुतादौ 'हविष' इत्युक्तम्। चतुर्थपादे मधुनो घृतस्येत्यनेन प्रकृत मेव मध्वादि उच्यत इत्याह— ("संवत्स-रीणा मिति। एतस्य समुच्चयस्य संवत्सराद् क्रियमाणत्वा-देतत् 'संवत्सरीणो भाग' यतः) ‡ स्वयमस्येति ॥ १४ ॥

अथ द्वितीय मन्त्रं व्याचष्टे—"ये देवा देवेष्विति §। 'देवाह्येते'

* पुरस्तात् ७ का० ४ प्र० १ ब्रा० १ कण्डी।

† वा० सं० १७. १३।

‡ बन्धनीचिह्नान्तः प्रदर्शितः पाठो ज-पुस्तकमात्रे अधिकः।

§ वा० सं० १७. १४।

इति। एते देवाः प्राणादेवेषु 'अधि देवत्वं' अधिका देवास्तेषां भाव स्तत्व 'मायन्' प्राप्नुवन् ताम्प्रति स्तेषा मुपजीव्यत्वात्। अत उक्तं 'ये देवा देवेष्विति' द्वितीयपादे सर्वात्मकत्वम्। ननु इन्द्रत्वादग्निशब्देनाग्नि रुच्यत इत्याह,— "प्रथमग्निरिति। तृतीयपादः प्रसिद्धार्थं इत्याह—"न हि प्राणेभ्य इति। तुरीयपादे ऽभिप्रेतं विशेषमाचष्टानेवति इति। 'ते' प्राणादित्यपि 'न' सन्ति पृथिव्या मपि न सन्ति 'किं' तु यदेव प्राणभृदस्तु तस्मिन् सन्तीत्वे-तदुक्तं भवति। देवाना मपि देवा यज्ञियाना मपि यज्ञिया ये प्राणाः संवत्सर सम्बन्धिनं भाग मुपासते। अस्मिन् पक्षे इविषा हुतांशस्यात्पर स्ते स्वयमस्य मधुनो घृतस्य पिबन्तु मधुनो घृतस्येति व्यत्ययेन कर्मणो षष्ठो, मधु घृतं उपलक्षण मेतत्। दध्यपि पिबंत्विति प्रथमस्यार्थः। ये देवाः देवेष्वपि अधिक-देवत्वं प्राप्नुवन् किञ्च ये अस्या अग्नेः पुरो गन्तारो भवन्ति येभ्यो विना किञ्चिदपि शरीरं न प्रवर्त्तते प्राणा दिवः सानुषु पृथिव्या अपि सानुषु न सन्ति। किन्तु यदेव प्राण-भृत् तत्रैव सन्तोति द्वितीयस्यार्थः। 'सानु' शब्दस्य (यद्दा-दिषु मास्तत् स्नून मुपसङ्ख्या मितित्तु .पादेशम्। समुच्चय-मन्वयो हि स्वसङ्ख्यां अग्नेः समुच्चयसाकल्ये हेतुत्वेन प्रशंसति ॥१५॥

"द्वाभ्या मिति। यजमानस्याग्निचयनेनाग्नित्वप्राप्ते यजमाना-ऽग्निः समुच्चयानन्तरम् प्रत्यवरोहेदित्याह यथेति) * ॥ १६ ॥

* बन्धनीचिह्नान्तः प्रग्रन्थः पाठो नास्ति ज-पुस्तकादर्शे ।

भवरोहणमन्वजपस्यानन्यव्यतिरेकयो गुणादोषाभावात् 'सर्वं हैत' इत्यादिना 'योऽयं गम्नि' वचनेन संस्तुतः एष सर्वे प्राणाः प्राजापत्यात्मकत्वात् सर्वेषां प्राणा इत्यर्थः। अतः सोऽध्वर्यु रवावसरे यदि 'आत्मन' एनां "प्राणदा * इत्येतान् मन्त्ररूपां प्राणरक्षणं न वदेत तर्हि एषोऽग्निरस्याध्वर्योः 'प्राणान् वृञ्जीत' वर्जयेदपगमयेदित्यर्थः। प्राणादेत्यादिमन्त्ररूप परिदाभिधाने तु तथा न कुर्यात्।

इत्थं मन्त्ररूपस्योपयोग मभिधायाथ मन्त्रं व्याचष्टे— "प्राणदा इति † । "एतद्वा मेऽसीत्येतदिति। 'मे' मदर्थं एषां प्राणादीनां मासीत्येतदेवोक्तं भवति न पुनरन्यार्थं मित्यर्थः। हे अग्ने त्वम् मे प्राणापानाव्यानानां वर्चसो धनस्य च दातासि। अतो ब्रवीमि ते हेतयो ऽस्मादन्यां 'तपन्तु' 'अस्मभ्यं' तु 'पावकः शिवश्च भव' ॥ १७ ॥

अग्नेरवरुह्य पश्चात् कर्तव्यं प्रयोग माह— "प्रत्येत्येति। अथात्मा इति 'अस्मै' यजमानाय 'व्रतं' पयः अत्सं 'वा अर्ध-व्रतं प्रयच्छति' 'अथ' तदा मैवोपराह्निकाभ्यां 'प्रवर्ग्योपसद्भ्यां प्रचर्य' अथ प्रवर्ग्यं मुत्सादयति 'यस्मैकामायैनं प्रवृणक्ति' तस्य कामस्याप्तेः स्यात् इत्यर्थः ॥ १८ ॥

'प्रवर्ग्य मुत्सादयति' सामान्येन विधानादत्र क्वचित् प्रसक्ता-वाह,— "तं वा इति। परितः अन्दो जलस्रवणं यस्य

* "प्राणदा इत्यवरोहति"—इति का० श्रौ० सू० १८. ३. ८।
† वा० सं० १७. १५।

परिष्यन्दो द्वीपः * ननु पृथिव्या मप्सु वा कस्मान्नोत्पाद्यत इत्याह,— "तस्मो वा इति एष प्रवर्ग्य स्तप्तत्वाच्छोक-विशिष्टो भवति। अतस्तं यदि पृथिव्यां मुत्सादयेत् तदा तस्य शोकः पृथिवीं प्राप्नोति। अथ यद्यप्सु उत्सादयेत् तदापस्तं शोकापः प्राप्नोति। तस्मात् तत्र नोत्सादनीयः किन्तु परिष्यन्दे तथा च पृथिवी मपश्च न हिनस्ति ननु परिष्यन्द उत्सादनेऽपि तत्र तदुभय सम्भवात् कथं तासां हिंसाभावः इति। तत्राह,— "यदद्भिरिति। अपां मध्ये-नुत्सादयो हिनस्ति यद्द्वीपे पृथिव्यो मेवोत्सादयति। तथा परिमितः शान्तिहेतु भूताभिरद्भिर्वेष्टयितत्वात् पृथिव्या अपि हिंसाभावो इत्यर्थः ॥ १९ ॥

प्रवर्ग्योद्वासनस्य स्थानान्तरं विधत्ते— "अग्नौत्वेवेति। पूर्वोक्त परिष्यन्दे अग्नौ वा प्रवर्ग्य उत्साद्यत इति विकल्प-विधान मेतत्। अतएव कात्यायनः— "अग्नौ परिष्यन्दे वा इति †। तत्तस्य प्रवर्ग्यस्य परिष्यन्द एवोद्वासने कस्यचिदपि बाधाभावादस्याग्नेः परिष्यन्दत्व माह— "इमे वै लोका इति। पृथिव्यादिलोकात्मकस्याग्नेः समुद्रवद्वेष्टनात् परिश्रिता-मेवात्मकत्वम् ॥ २० ॥

* "अग्नौ इष्टकाचितः स्थलरूपे ० परिष्यन्दे यस्य परितः आपः स्यन्दन्ते परिगच्छति परिष्यन्दो द्वीपः जलमध्यस्थो जलानाच्छादित उच्चप्रदेशः"—इति का० श्रौ० सू० १८. ३. ११।

† "उपवहन्ति प्रवर्ग्यासादनं यथोक्त मग्नौ परिष्यन्दे वा"—इति का० श्रौ० सू० १८. ३. १०।

अथाग्नावेवोद्वासनं प्रशंसति,— "यद्देवेति। अग्न्यादयो देवादीप्यमानत्वेन 'प्रवर्ग्या' अतश्च लोकत्रयात्मकादग्नेरन्यत्र प्रवर्ग्योत्सादने अग्न्यादीनेवैतेभ्यो लोकेभ्यो बहिर्धा कुर्यात्। अग्नौ तदुद्वासने तु एष्वेव लोकेषु अग्न्यादीन्निहितवान् भवति। अग्नावुत्सादयतीति लोपः शाकल्यस्येति * यकारस्य लोपः ॥ २१ ॥

अथ पुनस्तत्रैवोद्वासनं यज्ञस्य शिरः शरीरसन्धानरूपेण प्रशंसति;— "यद्देवाग्ना उत्सादयतीति ॥ २२ ॥

यदास्वग्न्यावुत्सादनं तदोद्वासने विशेष माह— "स्वयमातृण्ण-येति। 'प्रथमं प्रवर्ग्यं' स्वयमातृण्णाया 'संसृष्ट' मुद्वासयेत्। एवञ्च स्वयमातृण्णायाः † प्राणरूपत्वात् प्रवर्ग्यात्मकस्य यज्ञस्य शिरसः सञ्चिताग्न्यात्मकस्य यज्ञशरीरस्य प्राणेन सन्धानं करोति। "सन्द-धातीति। अस्यैव विवरणं 'उत्साद्य प्रवर्ग्य मिति'। तस्य प्रव-र्ग्यस्य यथा येन प्रकारेण प्रवर्ग्यकाण्डोक्तप्रकारेण उत्सादन मुक्तं तेन प्रकारेण प्रवर्ग्य मुत्सादयेत् प्रत्येत्याग्निं प्रहरिष्यन्नित्या-युक्तकालक्रियः प्रवर्ग्योत्साद्येतिल्यबन्तस्य प्रयोगः ॥ २३ ॥ १ ॥ २ ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
नवमकाण्डे द्वितीयाध्याये प्रथमं ब्राह्मणम् ॥

* पा० सू० ८. ३. १९।

† का० श्रौ० सू० १८. ३. १२।

॥ अथ द्वितीयं ब्राह्मणम् ॥

प्रत्येत्याग्निं प्रहरिष्यन्* । आहुतीश्च जुहोति समिधश्चादधात्येतद्वा ऽएनं देवा ऽएष्यन्तं पुरस्ताद्-न्नेनाप्रीणन्नाहुतिभिश्च समिद्भिश्च तथैवैन मय मेत-देष्यन्तं पुरस्तादन्नेन प्रीणात्याहुतिभिश्च समिद्भिश्च स वै पञ्चगृहीतं गृह्णीते तस्योक्तो बन्धुः† ॥ १ ॥

अथ षोडशगृहीतं गृह्णीते । षोडशकलः प्रजापतिः प्रजापतिरग्निरात्मसम्मितेनैवैन मेतदन्नेन प्रीणाति यदु वा ऽआत्मसम्मित मन्नं तदवति तन्न हिनस्ति यद्भूयो हिनस्ति तद्यत् कनीयो न तदवति समान्याꣳ स्रुचि गृह्णीते समानो हि स य मेतत् प्रीणाति वैश्वकर्म्मणाभ्यां जुहोति विश्व-कर्म्माय मग्निस्त मेवैतत् प्रीणाति तिस्र ऽआहुती-

* 'प्रहरिष्यन्'—इति ग, घ ।

† 'बन्धुः'—इति क।

जुहोति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतदन्नेन प्रीणाति * ॥ २ ॥

अथ समिध ऽआदधाति । यथा तर्प्पयित्वा परिवेविष्यातादृ तद्यौदुम्बर्यो भवन्त्यूर्ग्वै रस उदुम्बर ऽऊर्जैवैन मेतद्रसेन प्रीणात्यार्द्रा भवन्त्येतद्वै वनस्पतीना मनार्त्तं जीवं यदार्द्रं तद्यदेव वनस्पतीना मनार्त्तं जीवं तेनैन मेतत् प्रीणाति घृते न्युत्ता भवन्त्याग्नेयं वै घृतꣳ स्वेनैवैन मेतद् भागेन स्वेन रसेन प्रीणाति सर्व्वाꣳ रात्रिं वसन्ति तत्र हि ता रसेन सम्पद्यन्ते तिस्रः समिध ऽआदधाति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतदन्नेन प्रीणाति ॥ ३ ॥

यद्वेवैता ऽआहुतीर्जुहोति । एतद्वा ऽएनं देवा ऽएष्यन्तं पुरस्तादन्नेन समस्कुर्व्वन्नेताभिराहुतिभिस्तथैवैन मय मेतदेष्यन्तं पुरस्तादन्नेन संस्करोत्येताभिराहुतिभिः ॥ ४ ॥

---

† ० 'प्रीणाति'—इति ख ।

स वै पञ्चगृहीतं गृह्णीते। पञ्चधाविहितो वा ऽअयꣳ शीर्षन् प्राणो मनो वाक् प्राणश्चक्षुः श्रोत्र मेत मेवास्मिन्नेतत् पञ्चधाविहितꣳ शीर्षन् प्राणं दधात्यग्निस्तिग्मेन शोचिषेति तिग्मवत्या शिर ऽएवास्यैतया सꣳश्यति तिग्मतायै ॥ ५ ॥

अथ षोडशगृहीतं गृह्णीते। अष्टौ प्राणा अष्टावङ्गान्येता मभि सम्पदꣳ समान्याꣳ स्रुचि गृह्णीते समाने ह्येवात्मन्नङ्गानि च प्राणाश्च भवन्ति नाना जुहोत्यङ्गेभ्यश्च तत्प्राणेभ्यश्च व्विधृतिं करोति व्वैश्वकर्म्मणाभ्यां जुहोति व्विश्वकर्म्मायमग्निस्त मेवैतत् संस्करोति विस्र ऽआहुतिर्जुहोति विहृदग्नि-र्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतदन्नेन संस्करोति सप्तदशभिर्ऋग्भिः सप्तदशः प्रजापतिः प्रजापतिरग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतत् संस्करोत्येकविꣳशतिगृहीतेन द्वादश मासाः पञ्चर्त्तवस्त्रय ऽइमे लोका ऽअसावादित्य ऽएकविꣳश ऽएता मभिसम्पदम् ॥ ६ ॥

यद्देवैताः समिध ऽआदधाति। एतद्वा ऽएनं देवाः सर्व्वं कृत्स्नꣳ संस्कृत्याथैन मेतेनान्नेनाप्रीणन्नेताभिः समिद्भिस्तथैवैन मय मेतत् सर्व्वं कृत्स्नꣳ संस्कृत्याथैन मेतेनान्नेन प्रीणात्येताभिः समिद्भिरौदुम्बर्यो भवन्त्यार्द्रा घृते न्युत्ता सर्व्वाꣳ रात्रिं व्वसन्ति तस्योक्तो बन्धुरुदेन मुत्तरां नयेन्द्रेमं प्रतरां नय यस्य कुर्म्मो गृहे हविरिति यथैव* यजुस्तथा बन्धुस्तिस्रः समिध ऽआदधाति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतदन्नेन प्रीणाति तिस्र ऽआहुतीर्जुहोति तत् षट् तस्योक्तो बन्धुः॥ ७॥ १॥

॥ इति प्रथमप्रपाठके चतुर्थं ब्राह्मणम् [२. २.]

प्रवर्ग्योद्वासनानन्तरं सञ्चिते इष्टकासमूहे स्थापनायाग्निं प्रवेतुं तावद्गार्हपत्ये आज्यहोमं समिद्धोमं च विधत्ते—"प्रत्येत्याग्नि मिति। प्रहरिष्यन् प्रवेष्यन्नित्यर्थः। विहित-

* 'यथा यजुस्तथा'—इति ग, घ।

होम आहवनीयप्रदेशं समिद्धस्याग्नेः * प्रथमाय पुरस्तादेव † सम्पाद्यत इत्याह एतद्वा एन मित्यादिना आहुतिभिः समिद्धिरित्येतदचेनेत्यस्य विशेषणं आहुति समिद्रूपेणै नेने-त्यर्थः। आहुतिभि र्जुहोतो सामान्येन विधानात् कथं होमप्रकार इत्यपेक्षया माह — "स वै पञ्च गृहीत मिति। आज्यं पञ्चगृहीतं यथा भवति तथा गृह्णीतेत्यर्थः। तच्च तु "पञ्च वा ऋतव" ‡ इत्यादिकं ब्राह्मणं प्रागुक्तम्। अनेन पञ्चगृहीतेनाज्येनैकाहुतिः सम्पाद्यते ॥ १ ॥

अथ षोडशगृहीत माज्य गृह्णीते, अष्टौ प्राणा अष्टावङ्गा-नीत्येते: § षोडशावयवः प्रजापतिः अयं च चीयमानोऽग्निः प्रजा-पत्यात्मकः अतस्तस्य षोडशगृहीत मात्ममहत्त्व मनं न भवतीति तदुचितेनैवान्नेनेनं प्रीणाति। लोके हि यदेवान्न मात्मसंमितं तदेव रक्षति न च हिनस्ति भूयो हिंसकत्वादल्पस्य त्वप-र्याप्तत्वेनारक्षकत्वादिति। अत्र षोडश गृहीतं समं विभज्य द्वे आहुती क्रियते। अतश्चाहुतिभेदेन पृथगेव ग्रहणप्रसक्तावाह,— "समान्या मिति। समान्या मेकस्या मेव स्रुचि गृह्णीत-

---

* 'समिध्यातायेः'—इति ङ, 'समिध्यताग्नेः'—इति ञ, 'समिध्यातान्ग्रेः'—इति झ ञ।

† 'पुरस्तादर्भ न'—इति ङ झ, ञ।

‡ द्रष्टव्य पुरस्तात् ८. ५. १।

§ 'अष्टावङ्गानीतिमे'—इति ङ, 'अष्टावङ्गानीतीमे'—इति ञ।

षोडशगृहीत माज्यं सहैव गृह्णीयादित्यर्थः। आहुतिभेदेऽपि कथ मेकं गृह्णात इत्यत आह— "समानो होति। एतेन षोडशगृहीतेनाज्येन यं प्रीणाति तस्याग्नेरेकत्वादित्यर्थः। प्रकृतेन षोडशगृहीतेनाज्येन साध्यौ द्वौ होमाविति दर्शयत् मन्त्रे वर्णिता देवता सम्बन्धस्याग्नये प्रकृतहोमे समवेतार्थ माह— "वैश्वकर्मणाभ्या मिति। वैश्वकर्मणशब्द उद्भिदादि शब्दवत्कर्मनामधेयं अग्नेः प्राजापत्यात्मकत्वेन विश्व विषय-कर्मवत्वाद्विश्वकर्मत्वम्। पञ्चगृहीतेनाज्येनैकाहुतिः षोडश गृहीतेन द्वे आहुति इति। तिस्र आहुतयः सम्पद्यन्ते सा च त्रिलक्षणात्मकस्य अग्नेस्तृप्ति हेतु र्न भवतीत्याह,— "तिस्र आहुती र्जुहोति त्रिवृदग्नि रिति। आहुतीश्च जुहोति समिधश्च दधातीति होमद्वय मपि सामान्येन विहितम्। तत्राज्याहुतीनां होमप्रकारोऽभिहितः॥ २॥

अथ समिधां होमे विशेष मभिधातु माह— "अथ समिध इति। यथा तर्पयत्वेति लोके जनः किञ्चित् पुरुष मन्येन तर्पयित्वा पश्चादन्नविशेषाणां परिवेषणं करोति तद्वदेवाय मपि समिद्धोमो भवति। आज्याहुतिलक्षणस्याशनस्य प्रथमं सम्पा-दितत्वादित्यर्थः। परिवेविष्यादित्यत्रिषे यङ्लुगन्तस्य लिङि रूपं ताश्च समिध औदुम्बर्यो भवेयु रित्याह— "औदुम्बर्य इति। उदम्बरस्य ऊर्गूपरसात्मकत्वात्तेनैवैनं प्रीणातीत्याह— "ऊर्ग्वा इति। एतद्वै वनस्पतीना मित्यादिकस्याय मर्थः। आर्द्राः आर्द्रत्वं गुण इति यत् एतद्वनस्पतीना मार्द्र मनुप्रहृतं जीवं

आर्द्रतराणा मुपजीवत्वात् ; अत आर्द्राभिः समिद्भि र्होमे तेन जीवेनैनं प्रीणाति। अग्नौ हूयमानस्य घृतस्य समिदादिवद् भस्मो भावात्। केवलं ज्वालारूपेण परिणामादाग्ने रयैवं मतएव श्रूयते। एतद्वा अग्नेः प्रियं धाम यदाज्य मिति (ताः समिधः पूर्वयूराग्नौ सर्वस्या मेव घृते वसन्ति। सर्वां रात्रिमीत्यन्यसां योगे द्वितीया तस्तथा निवासे हि) * ताः रसेन सम्पन्ना भवन्तीति। अत स्तथाविधाभि समिद्भि र्होमे स्वकीयेन रसरूपेण तापनेन मग्नि प्रीणितवान् भवतीति। "समिध आदधातीति। सामान्येन बहुत्वविधाना त्त्रित्वविशेषे पर्यवसान माह— "तिस्र इति। ताश्च त्रित्वसङ्ख्यां सकलाग्निप्रीतिहेतुत्वेन प्रशंसति ॥ ३ ॥

"यद्वैवैता इति। समस्कुर्वन्निति आहवनीयरूपतानुगुणसंस्कार विशिष्ट मकुर्वन्नित्यर्थः ॥ ४ ॥

तत्र प्रथमाहुत्यर्थं पञ्चवार ग्रहणं अग्नेः शीर्षस्थ प्राणपञ्चको त्तमरूपेण प्रशंसति— "स वै पञ्च गृह्णीत मिति। वागिति वागिति मुखं प्राण इति प्राणं चक्षुर्द्वयं च द्वौ प्राणौ एते मनःसहितावागादयः शिरसि पञ्चविहिताः प्राणाः अतश्च पञ्चवारग्रहणेनास्मिन्नग्नेः शिरसि मनःप्रभृति प्राणपञ्चकं निदधाति। होममन्त्रस्य तिग्मपदसम्बन्धं प्रशंसति— अग्ने तिग्मेनेति तिग्मशब्दस्य तैक्ष्ण्यवाचकत्वात् तद्वत्या ऋचा होमेन तैक्ष्ण्यासिद्ध्येग्नेः शिरस्तीक्ष्णं करोति पश्यन्तीति शो तनूकरणे अस्माद्घटिश्यतिर्नुतः श्यतीत्योकारलोपः। अथ तत्राहुति द्वयार्थं

* चन्द्रमोचिह्नान्तः प्रदर्शितः पाठो ज-पुस्तकमात्रे नास्ति।

षोडशवारग्रहणं प्रशंसति, ( प्रशिद्धान्यष्टावङ्गानि । एतासां सम्यङ्मभिलक्ष्य षोडशगृहीतस्य ग्रहणं षण्मिन्नग्नौ प्राणाङ्गा- ष्टकं सम्पादनार्थं षोडशवारं गृह्णीत इत्यर्थः। एकस्मिन्नेव शरीरे अङ्गानां प्राणानाञ्चावस्थानात् षोडशगृहीत मेवस्तु विगृह्णीते * ) होमस्तु पृथगेव करोति। एवं च अङ्गानां प्राणानाञ्च विधृतिं विभेदेन धारण मसङ्कीर्णतां करोति। तयो र्होमयो र्वैश्वकर्मणत्वाद्विश्वकर्मशब्दाभिधेय मग्निं संस्क- रोति। आहुतीनाञ्च वित्वाविहुतीनेः सकलस्यापि संस्कारं सम्पादयति पञ्चाग्निस्तिग्मेनेत्यनया ऋचा पञ्चगृहीतं हूयते य इमा विश्वेत्यादिभिरष्टाभिर्ऋग्भिः षोडश गृहीतार्धं हूयते अवशिष्टं चक्षुषः पितेत्यादिभिरष्टाभि † हूयते। अतएव कात्या- यनः ; — “पञ्च गृहीतं जुहोत्यग्निस्तिग्मेनेत्यृचा षोडशगृही- तार्धं मनुवाकशेषेण” “चक्षुषः पितेत्य परमनु वाकेना”- इति ‡। एवं सर्वाः सम्भूय सप्तदश भवन्ति ता एतान् सङ्ख्या सम्पन्नाग्निसंस्काराहेतुत्वेन प्रशंसति, — “सप्तदशभि ऋग्भिरिति। प्रजापतेः सप्तदशत्वं तैत्तिरीयके श्रुतम्,—“आश्रावयेति चतुरक्षर मस्तु श्रौषडिति चतुरक्षरं यजेति द्व्यक्षरं ये यजामहे इति पञ्चाक्षरं द्व्यक्षरो वषट्कार एष वै सप्तदशः प्रजापतिः”-इति §।

---

* वन्धनीचिह्नान्तः प्रदर्शितः पाठो नास्ति ज-पुस्तकादन्यत्र।

† “पितेत्यादिभिर्हूयते”—इति ज।

‡ का० श्रौ० सू० १८. ३. १२-१४।

§ तै० ब्रा १. ६. ११

अथवा अष्टौ प्राणा अष्टावङ्गानि स्वय मेक इति सप्तदशात्मकः मिलितां अष्टषडङ्गां प्रशंसति,— "एकविंशति मष्टोतिमेति। "द्वादश मासाः पञ्चऽर्त्तव स्त्रय इमे लोका असावादित्य एकविंश" एता मभिलक्ष्य एकविंशति गृहीतेन हूयते। एतस्याग्नेर्यथोक्तैकविंशात्मकत्व सम्पादनायैकविंशति गृहीतेन होम इत्यर्थः॥ ६॥

अथ समिद्धां होम प्रकारान्तरेण प्रशंसति,— "यद्वेवैता इति। जर्थं यथा तर्पयित्वा परिवेष्यादिति माज्याहुतिलक्षणेनाद्येनं तर्पितस्याग्नेः समिद्धोमः परिवेषणवद्भवतीति प्रशंसितः। इदानीन्तु एकविंशति गृहीत होमेन एकविंशत्यात्मकत्व सम्पादनात् कात्स्न्र्येन संस्कृतस्याग्नेरन्नरूपेण प्रशस्यत इति न पौनरुक्त्यम्। सर्वमित्यस्यैवार्थं कथनं कृत्स्न मिति "औदुम्बर्यो भवन्त्यार्द्रा घृते न्युप्ता सर्वां रात्रिं वसन्ति"–इति यदस्ति तस्य ऊर्ग्वा उदुम्बर इत्यादिरूपं ब्राह्मण मनन्तर मेवोक्तं तदेवानुसन्धेयेत्यर्थः। प्रकृतानां समिदाहुतीनां मन्त्रा निगदव्याख्याता इत्याह—"उदेन मुत्तरान्नयेति *। "उदेन मुत्तरान्नयेत्यादिकः प्रथमो मन्त्रः, "इन्द्रेमं प्रतरान्नयेत्यादिको द्वितीयः † "यस्य कुर्मो गृहे हविरित्यादिक स्तृतीयः ‡, एतेषां यथा मन्त्रस्य तथैव ब्राह्मणं स्पष्टार्था इत्यर्थः। "तिस्रः समिध" इत्येत-

---

* वा० सं० १७. ५० ।

† वा० सं० १७. ५१ ।

‡ वा० सं० १७. ५२ ।

दुक्तार्थं आज्यमभिदाहुतिं मन्त्रां भूयः स्तौति— "तिस्र आहुति रिति। प्रकृतत्वात्तिस्रः समिध आदधातीति सम्बन्ध्यते, एवं षट् मन्त्रां सम्पद्यन्ते तद्ब्राह्मणं-"षड् वा ऋतव" इत्यादि-रूपं प्रागुक्त मित्यर्थः * ॥ ७ ॥ ३ [ २. २. ] ॥

इति श्रीसायणाचार्यविरचिते माधवीये वेदार्थप्रकाशे
माध्यन्दिनशतपथब्राह्मणभाष्ये
नवमकाण्डे द्वितीयाध्याये द्वितीयं ब्राह्मणम् ॥

॥ इति नवमकाण्डे प्रथमः प्रपाठकः समाप्तः ॥

---

* पुरस्तात् ८. ५. १ ।

अथ

द्वितीयप्रपाठके प्रथमं ब्राह्मणम्,

अपि वा

द्वितीयाध्याये तृतीयं ब्राह्मणम्।

---

॥ हरिः ॐ ॥

अथातः सम्प्रैष्यति। उद्यच्छेध्ममुपयच्छोपयमनीरग्नये प्रक्रियमाणायानुब्रूह्यग्नीदेकस्फ्ययानूद्धि* ब्रह्मन्प्रतिष्ठं जपेति ॥ १ ॥

एतद्वै देवानुपप्रैष्यतः। एतं यज्ञं तंस्यमानान् दक्षिणतोऽसुरा रक्षांसि नाष्ट्रा अभिघांसन्न यच्च्यध्वे न यज्ञं तंस्यध्व इति ॥ २ ॥

ते देवा इन्द्रमब्रुवन्। त्वं वै नः श्रेष्ठो बलिष्ठो वीर्यवत्तमोऽसि त्वमिमानि रक्षांसि प्रतियतस्वेति तस्य वै मे ब्रह्म द्वितीयमस्त्विति

---

* '०स्फ्ययानुद्धेहि'—इति क, ख, ङ।

तथेति तस्मै वै बृहस्पतिं द्वितीय मकुर्व्वन् ब्रह्म वै बृहस्पतिस्त ऽइन्द्रेण चैव बृहस्पतिना च दक्षिणतो ऽसुरान् रक्षाꣳसि नाष्ट्रा अपहत्याभये ऽनाष्ट्र ऽएतं यज्ञ मतन्वत ॥ ३ ॥

तद्वा ऽएतत् क्रियते। यद्देवा अकुर्व्वन्निदं नु तानि रक्षाꣳसि देवैरेवापहतानि यत्त्वेतत् करोति यद्देवा ऽअकुर्व्वंस्तत्करवाणीत्यथो ऽइन्द्रेण चैवैतद् बृहस्पतिना च दक्षिणतो ऽसुरान् रक्षाꣳसि नाष्ट्रा ऽअपहत्याभये ऽनाष्ट्र ऽएतं यज्ञं तनुते ॥ ४ ॥

स यः स इन्द्रः। एष सो ऽप्रतिरथो ऽथ यः स बृहस्पतिरेष स ब्रह्मा। तद्यद्ब्रह्मा प्रतिरथं जपतीन्द्रेण चैवैतद् बृहस्पतिना च दक्षिणतो ऽसुरान् रक्षाꣳसि नाष्ट्रा अपहत्याभये ऽनाष्ट्र ऽएतं यज्ञं तनुते॥ तस्माद् ब्रह्माप्रतिरथं जपति * ॥ ५ ॥

आशुः शिशानो वृषभो न भीम इति+। ऐन्द्र्यो ऽभिरूपा द्वादश भवन्ति द्वादश मासाः

* 'जपति'-इति क। † 'इति'-इति क, ख।

संव्वत्सरः संव्वत्सरो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैतद्धविषातो ऽसुरान् रक्षाꣳसि नाष्ट्रा अपहन्ति त्रिष्टुब्भिर्व्वज्रो * वै त्रिष्टुब्वज्रेणैवैतद्धविषातो ऽसुरान् रक्षाꣳसि नाष्ट्रा अपहन्ति ता हाविꣳशति-र्गायत्र्यः सम्पद्यन्ते तदाग्नेय्यो भवन्त्यग्निकर्म्म हि † ॥ ६ ॥

अथैन मुद्यच्छति ‡ । उदु त्वा व्विश्वे देवा अग्ने भरन्तु चित्तिभिरिति तस्योक्तो बन्धुः § ॥ ७ ॥

अथाभिप्रयन्ति । अस्य दिशो देवीर्य्यष्ट्र भवन्तु देवीरिति देवाश्चासुराश्चोभये प्राजापत्या दिक्ष्व-स्पर्द्धन्त ते देवा असुराणां दिशो ऽवृञ्जत तथै-वैतद्यजमानो द्विषतो भ्रातृव्यस्य दिशो वृङ्क्ते देवीरिति तदेना देवीः कुरुते ॥ यष्ट्र भवन्तु देवी-

* 'त्रिष्टुभिर्व्वज्रो'--इति क ख ।

† 'हि'—इति क, 'हि'—इति ग, घ ।

‡ 'मुद्यच्छति'—इति क ।

§ 'बन्धुः'—इति ङ ।

|| 'कुरुते'—इति ग ।

रिति यज्ञमिमं मवन्तु देवीरित्येतदपामतिं दुर्म्मतिं बाधमाना इत्यशनाया वा ऽअमतिरशनायामप- बाधमाना इत्येतद्रायस्पोषे यज्ञपतिमाभजन्ती- रिति रय्यां च पोषे च यज्ञपतिमाभजन्तीरित्ये- तद्रायस्पोषे ऽअधि यज्ञो ऽअस्थादिति रय्यां च पोषे चाधि यज्ञो ऽस्थादित्येतत् * ॥ ८ ॥

समिद्धे ऽअग्नावधि मामहान इति। यज- मानो वै मामहान उक्थपत्र इत्युक्थानि ह्येतस्य पत्राणीड्य इति यज्ञियं इत्येतद्गृभीत इति धारित इत्येतत्तप्तं घर्म्मं परिगृह्यायजन्तेति तप्तं ह्येतं घर्म्मं परिगृह्यायजन्तोर्जा यद्यज्ञमयजन्त देवा इत्यूर्ज्जा ह्येतं यज्ञमयजन्त देवाः † ॥ ९ ॥

दैव्याय धर्त्रे जोष्ट्र ऽइति। दैवो ह्येष धर्त्ता जोषयितृतमो देवश्रीः श्रीमनाः शतपया इति देवश्रीर्ह्येष श्रीमनाः शतपयाः परिगृह्य देवा यज्ञ मायन्निति परिगृह्य ह्येतं देवा यज्ञमायन् देवा

* 'ऽस्थादित्येतत्'—इति ग, घ।

† 'देवाः'—इति ग, घ।

देवेभ्यो ऽध्वरयन्तो अस्युरित्यध्वरो वै यज्ञो देवा देवेभ्यो यज्ञियन्तो ऽस्युरित्येतत् ॥ १० ॥

व्वीतꣳ हविः शमितꣳ शमिता यजध्या ऽइति । इष्टꣳ स्विष्ट मित्येतत्तुरीयो यज्ञो यत्र हव्यमेतीत्यध्वर्युः पुरस्ताद्यजूꣳषि जपति होता पश्चादृचो ऽन्वाह ब्रह्मा दक्षिणतो ऽप्रतिरथं जपत्येष ऽएव तुरीयो यज्ञस्ततो व्वाका आशिषो नो जुषन्ता मिति ततो नो व्वाकाश्चाशिषश्च जुषन्ता मित्येतत् * ॥ ११ ॥

सूर्य्यरश्मिर्हरिकेशः पुरस्तात् । सविता ज्योतिरुदयां† अजस्र मित्यसौ वा ऽआदित्य एषोऽग्निः स ऽएष सूर्य्यरश्मिर्हरिकेशः पुरस्तात् सवितैतज्ज्योतिरुद्यच्छत्यजस्रं तस्य पूषा प्रसवे याति व्विद्वानिति पशवो वै पूषा त ऽएतस्य प्रसवे प्रेरते सम्पश्यन् विश्वा भुवनानि गोपा इत्येष वा ऽइदꣳ

---

* 'मित्येतत्'—इति ग, घ ।

† 'ज्योतिरुदयां॰॥'—इति क, 'ज्योतिरुदयां॥'— ति ख, 'ज्योतिरुदयां॥॥'—इति क ।

सर्व्वंᳫं सम्पश्यत्येष ऽउ ऽएवास्य सर्व्वस्य भुवनस्य गोप्ता * ॥ १२ ॥

तद्या अमुष्मादादित्यादर्व्वाच्यः पञ्च दिशः । ता ऽएतद्देवा ऽअसुराणा मह्नञ्जतायो ता ऽएवेतत् समारोहंस्ता ऽउ ऽएवैतद्यजमानो द्विषतो भ्रातृव्यस्य वृङ्क्तेऽथो ता ऽएवैतत् समारोहत्यथो ऽएतद्वा ऽएताभिर्द्देवा आतः सम्प्राप्नुवंस्तथैवाभिरय मेतद्रातः सम्प्राप्नोति † ॥ १३ ॥

अथाश्मानं पृश्नि मुपदधाति । असौ वा ऽआदित्यो ऽश्मा पृश्निरमु मेवैतदादित्य मुपदधाति पृश्निर्भवति रश्मिभिर्हि मण्डलं पृश्नि त मन्तरेणाहवनीयं च गार्हपत्यं चोपदधात्ययं वै लोको गार्हपत्यो द्यौराहवनीय ऽएतं तदिमौ लोकावन्तरेण दधाति ‡ तस्मादेष ऽइमौ लोकावन्तरेण तपति ॥ १४ ॥

* 'गोप्ता'—इति ग, 'गोप्ता'—इति घ ।

† 'सम्प्राप्नोति'—इति क ।

‡ 'दधाति'- इति क ।

चाग्नीध्रवेलायाम्। अन्तरिक्षं वा ऽआग्नीध्र मेतं तदन्तरिक्षे दधाति तस्मादेषो ऽन्तरिक्षाय-तनो व्यख्ये व्यख्ये ह्येष हूतः * ॥ १५ ॥

स एव प्राणः। प्राण मेवैतदात्मन् धत्ते तदे-तदायुरायुरेवैतदात्मन् धत्ते तदेतदन्न मायुर्ह्येतदन्न मु वा ऽआयुरस्मा भवति स्थिरो वा ऽअस्मा स्थिरं तदायुः कुरुते पृश्निर्भवति पृश्नीव ह्यन्नम् ॥ १६ ॥

स उपदधाति। विमान एष दिवो मध्य ऽआस्त ऽइति विमानो ह्येष दिवो मध्य ऽआस्त ऽआपप्रिवान्रोदसी अन्तरिक्ष मित्युद्यन् वा ऽएष ऽइमांल्लोकानापूरयति स विश्वाचीरभिचष्टे घृताची रिति स्रुचश्चैतद्वेदीश्चाहान्तरा पूर्व्वमपरं च केतु मित्य-न्तरेमञ्च लोक ममु ञ्चेत्येतदथो यच्चेद मेतर्हि चीयते यच्चादः पूर्व्वं मचीयतेति ॥ १७ ॥

उक्षा समुद्रो ऽअरुणः सुपर्ण ऽइति। उक्षा ह्येष समुद्रो ऽरुणः सुपर्णः पूर्व्वस्य योनिं पितुरा-विवेशेति पूर्व्वस्य ह्येष एतं योनिं पितुराविशति

* 'हुतः'—इति ग, घ।

मध्ये दिवो निहितः पृश्निरश्मेति मध्ये ह्येष दिवो निहितः पृश्निरश्मा विचक्रमे रजसस्पात्वन्ताविति विक्रममाणो वा ऽएष ऽएषां लोकाना मन्तान्याति ॥ १८ ॥

द्वाभ्या मुपदधाति । द्विपाद्यजमानो यजमानो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतदुपदधाति त्रिष्टुब्भ्यां* त्रैष्टुभो ह्येष न सादयत्यसन्नो ह्येष न सूददोहसाधिवदति प्राणो वै सूददोहाः ऽप्राण ऽएष किं प्राणे प्राणं दध्यामिति तं निधाय यथा न नश्येत् ॥ १९ ॥

अथोपायन्ति† । इन्द्रं विश्वा ऽअवीवृधन्निति तस्योक्तो बन्धुर्देवहूर्यज्ञ ऽआ च वक्षत्सुम्नहूर्यज्ञ ऽआ च वक्षदिति देवहूश्चैव यज्ञः सुम्नहूश्च यज्ञदग्निर्देवो देवाꣳ॥ ऽआ च वक्षदिति यक्षच्चैवाग्निर्देवो देवाना च वहत्वित्येतत् ॥ २० ॥

---

* 'त्रिष्टुभ्यां'—इति क, ख, ङ ।

† 'अथोपातियन्ति'—इति क, ख, ङ ।

‡ 'वहन्वित्येतत्'—इति ग, घ ।

वाजस्य मा प्रसवः। उद्ग्राभेणोदग्रभीत् अधा सपत्नानिन्द्रो मे निग्राभेणाधराँ२॥ ऽअकरिति यथैव यजुस्तथा बन्धुः ॥ २१ ॥

उद्ग्राभं च निग्राभं च। ब्रह्म देवा अवीवृधन् अधा सपत्नानिन्द्राग्नी मे विषूचीनान् व्यस्यता मिति यथैव यजुस्तथा बन्धुः ॥ २२ ॥

तद्या अमुष्मादादित्यादूर्ध्वास्तन्वो दिशः। ता एतद्देवा असुराणा मवृञ्जताथो ता एवैतत् समारोहंस्ता उ ऽएवैतद्यजमानो द्विषतो भ्रातृव्यस्य वृङ्क्तेऽथो ता एवैतत् समारोहत्यथो ऽएतद्दा ऽएता-भिर्देवा आप्तः सम्प्राप्नुवंस्तथैवाभिरय मेतदाप्तः संम्प्राप्नोति * ॥ २३ ॥

अथाग्नि मारोहन्ति। क्रमध्व मग्निना नाक मिति स्वर्गो वै लोको नाकः क्रमध्व मनेनाग्नि-नैतꣳ स्वर्गं लोक मित्येतदुख्यꣳ हस्तेषु बिभ्रत

* 'संप्राप्नोति' --इति ख

हुत्यस्यꣳ ह्येत ऽएतꣳ हस्तेषु बिभ्रति दिवस्पृष्ठꣳ स्वर्गत्वा मिश्रा देवेभिराध्व मिति दिवस्पृष्ठꣳ स्वर्गं लोकं गत्वा मिश्रा देवेभिराध्व मित्येतत्* ॥ ॥ २४ ॥

प्राची मनु प्रदिशं प्रेहि विद्वानिति । प्राची वै दिगग्नेः स्वा मनु प्रदिशं प्रेहि विद्वानित्येतदग्ने रग्ने पुरो ऽअग्निर्भवेहेत्यस्य त्व मग्नेरग्ने पुरो ऽग्नि† र्भवेहेत्येतद्विश्वा आशा दीद्यानो विभाहीति सर्व्वा आशा दीप्यमानो विभाहीत्येतदूर्ज्जं नो धेहि द्विपदे चतुष्पद ऽइत्याशिष माशास्ते ॥ २५ ॥

पृथिव्या ऽअहम्‡ । उदन्तरिक्ष मारुह मन्तरिक्षा-द्दिव मारुह मिति गार्हपत्याद्वाग्नीध्रीय मागच्छ-त्याग्नीध्रीयादाहवनीयं दिवो नाकस्य पृष्ठात्स्वर्ज्योति-

* 'मित्ये तत्'—इति ग, घ ।

† 'पुरो अग्नि'—इति क, 'पुरोग्नि'—इति ख, घ ।

‡ 'पृथिव्याहम्'—इति क, पृथिव्या ऽअहम्'—इति ख, 'पृथिव्या अहम्'—इति ग ।

रगामेत्य मिति दिवो नाकस्य पृष्ठात्स्वर्गं लोक-
मगामेत्य मित्येतत् * ॥ २६ ॥

स्वर्यन्तो नापेक्षन्ते। आ द्याꣳ रोहन्ति रोदसी
इति न हैव ते ऽपेक्षन्ते ये स्वर्गं लोकं यन्ति
यज्ञं ये विश्वतोधारꣳ सुविद्वाꣳसो वितेनिर
इत्येष एव यज्ञो विश्वतोधार एत उ ऽएव सु-
विद्वाꣳसो य ऽएतं वितन्वते † ॥ २७ ॥

अग्ने प्रेहि प्रथमो देवयता मिति। इम
मेतदग्नि माह त्व मेषां प्रेहि प्रथमो देवयता मिति
चक्षुर्देवाना मुत मर्त्याना मित्युभयेषाꣳ ह्येतद्देव-
मनुष्याणां चक्षुरियक्षमाणा भृगुभिः सजोषा इति
यजमाना भृगुभिः सजोषा इत्येतत्स्वर्यन्तु यजमानाः
स्वस्तीति स्वर्गं लोकं यन्तु यजमानाः स्वस्तीत्येतत् ‡ ॥
॥ २८ ॥

तद्या अमुष्मिंल्लोके पञ्च दिशः। ता एतद्देवा

* 'मित्येतत्'—इति ग, 'मित्येतत्'—इति घ।

† 'वितन्वते'—इति ग, 'विमन्वते'—इति घ।

‡ 'स्वस्तीत्येतत्'—इति ग, घ।

ऽसुराणा मवृञ्जताथो ता एवैतत् समारोहंस्ता उ ऽएवैतद्यजमानो द्विषतो भ्रातृव्यस्य वृङ्क्ते ऽथो ता एवैतत् समारोहत्यथो ऽएतद्वा ऽएताभिर्देवा आतः सम्प्राप्नुवंस्तथैवाभिरय मेतदातः सम्प्राप्नोति* ॥ २९ ॥

अथैन मभिजुहोति । एतद्वा ऽएनं देवा ईयि-वाᳬंस मुपरिष्टादन्नेनाप्रीणन्नेतयाहुत्या तथैवैन मय मेतदीयिवाᳬंस मुपरिष्टादन्नेन प्रीणात्येतयाहुत्या कृष्णायै शुक्लवत्सायै पयसा रात्रिर्वै कृष्णा शुक्ल-वत्सा तस्या असावादित्यो वत्सः स्वेनैवैन मेतद् भागेन स्वेन रसेन प्रीणात्युपरि धार्य्यमाण उपरि धार्य्यमाण उपरि हि स य मेतत् प्रीणाति दोहनेन हि पयः प्रदीयते ॥ ३० ॥

यद्वेवैन मभिजुहोति । शिर एतद्यज्ञस्य यदग्निः प्राणः पयः शीर्षंस्तत् प्राणं दधाति यथा स्वय-मातृण्णा मभिप्रश्वरेदेव मभिजुहुयात् प्राणः स्वय-मातृण्णा रस एष शिरश्च तत् प्राणश्च रसेन सन्तनोति

* 'सम्प्राप्नोति'—इति

सन्दधाति नक्तोषासा समनसा विरूपे ऽइति तस्योक्तो बन्धुः ॥ ३१ ॥

अग्ने सहस्राक्षेति। हिरण्मयशकलैर्वा ऽएष सहस्राक्षः शतमूर्द्धन्निति यदद: शतशीर्षा रुद्रो ऽसृज्यत शतं ते प्राणाः सहस्रं व्याना इति शतᳲ हैव तस्य प्राणाः सहस्रं व्याना यः शतशीर्षा त्वᳲ साहस्रस्य राय ईशिषऽ इति त्वᳲ सर्व्वस्यै रय्या ऽईशिष ऽइत्येतत्तस्मै ते विधेम वाजाय स्वाहेत्यन्नं वै वाजस्तमेतत् प्रीणाति ॥ ३२ ॥

द्वाभ्या मभिजुहोति। द्विपाद्यजमानो यजमानो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैनमेतदभिजुहोति * ॥ ३३ ॥

अथैनं निदधाति। सुपर्णोऽसि गरुत्मानित्येतद्वा ऽएनं मदो विकृत्या सुपर्णं गरुत्मन्तं विकरोति तᳲ सुपर्णं गरुत्मन्तं चिनोति तᳲ सुपर्णं गरुत्मन्तं कृत्वान्ततो निदधाति पृष्ठे पृथिव्याः

---

* 'मेतदभिजुहोति'—इति ख।

सीद भासान्तरिक्ष मापृण ज्योतिषा दिव मुत्तभान तेजसा दिश उद्दृ॰हेत्येवर्ं ह्येष एतत् सर्व्वं करोति*॥ ॥ ३४ ॥

आजुह्वानः सुप्रतीकः पुरस्तादिति । आजुह्वानो नः सुप्रतीकः पुरस्तादित्येतदग्ने स्वं योनि मासीद साधुयेत्येष वा ऽअस्य स्वो योनिस्त॰ साध्वासीदेत्येतदस्मिन्त्सधस्थे ऽअध्युत्तरस्मिन्निति द्यौर्व्वा ऽउत्तर॰ सधस्थं विश्वे देवा यजमानश्च सीदतेति तद्विश्वैर्द्देवैः सह यजमान॰ सादयति द्वाभ्यां निदधाति तस्योक्तो बन्धुर्व्वषट्कारेण तस्योपरि बन्धुः ॥ ३५ ॥

अथास्मिन्त्समिध आदधाति । एतद्वा ऽएनं देवा ऽईयिवा॰स मुपरिष्टादन्नेनाप्रीणन्त्समिद्भिश्चाहुतिभिश्च तथैवैन मय मेतदीयिवा॰ समुपरिष्टादन्नेन प्रीणाति समिद्भिश्चाहुतिभिश्च †॥ ३६ ॥

* 'करोति'—इति क ।

† 'आहुतिभिश्च'—इति क, घ

स वै शमीमयीं प्रथमा माऽदधाति। एतद्वा ऽएष एतस्या माहुत्याᳪ हुतायां प्रादीप्यतोदज्वलत् तस्माद्देवा अबिभयुर्यद्वै नो ऽयं न हिᳪस्यादिति त ऽएताᳪ शमी मपश्यंस्तयैन मशमयंस्तद्यदेतᳪ शम्या-शमयंस्तस्माच्छमी तथैवैन मय मेतच्छम्या शमयति शान्त्या ऽएव न जग्ध्यै ॥ ३७ ॥

ताᳪ सवितुर्वरेण्यस्य। चित्रा माहं वृणे सुमतिं विश्वजन्याम् या मस्य कण्वो ऽअदुहत् प्रपीनाᳪ सहस्रधारां पयसा महीं गा मिति कण्वो हैनां ददर्श सा हास्मै सहस्रधारा सर्व्वान् कामान् दुदुहे तथैवैतद्यजमानाय सहस्रधारा ·सर्व्वान् कामान् दुदुहे * ॥ ३८ ॥

अथ वैकङ्कती माऽदधाति। तस्या उक्तो बन्धु-र्व्विधेम ते परमे जन्मन्नग्न ऽइति द्यौर्व्वा ऽअस्य परमं जन्म व्विधेम स्तोमैरवरे सधस्थ इत्यन्तरिक्षं व्वा ऽअवरᳪ सधस्थं यस्माद्योनेरुदारिथा यजे त

* 'दुदूहे'--इति क।

मित्येव वा ऽअस्य स्वो योनिस्तं यत्र ऽवृत्येतस्य* स्वे हवीᳪंषि जुहुयं समिद्ध ऽइति यदा वा ऽएष समिध्यते ऽथैतस्मिन् हवीᳪंषि प्रजुहोति ॥ ३९ ॥

अथौदुम्बरीं माऽदधाति। ऊर्ग्वै रस उदुम्बर ऊर्ज्जैवैन मेतद्रसेन प्रीणाति कर्णकवती भवति पशवो वै कर्णकाः पशुभिरेवैन मेतदन्नेन प्रीणाति यदि कर्णकवतीं न विन्देदपि दधिद्रप्स मुपहत्यादध्या- द्दधिद्रप्स उपतिष्ठते तदेव पशुरूपं प्रेद्धो ऽअग्ने दीदिहि पुरो न इति विराजादधात्यन्नं विरा- डन्नेनैवैन मेतत् प्रीणाति तिस्रः समिध मादधाति त्रिवृदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेत- दन्नेन प्रीणाति† ॥ ४० ॥

अथाहुतीर्जुहोति। यथा परिविष्यानुपाययेत् तादृक्तत् स्रुवेण पूर्व्वां स्रुचोत्तरा मग्ने त मद्याश्वं न स्तोमैः क्रतुं न भद्रᳪं हृदिस्पृशम् ऋध्यामा त

* 'ऽहृत्येतस्य'—इति ग. घ

† प्रीणाति - इति क।

ऽओहैरिति यस्ते हृदिस्पृक्स्तोमस्तं त ऽऋध्यास-
मित्येतत् पङ्क्त्या जुहोति पञ्चपदा पङ्क्तिः पञ्च-
चितिकोऽग्निः पञ्च ऽर्त्तवः संव्वत्सरः संव्वत्सरो
ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतदन्नेन
प्रीणाति * ॥ ४१ ॥

अथ व्वैश्वकर्म्मणीं जुहोति । व्विश्वकर्म्माय
मग्निस्त मेवैतत् प्रीणाति चित्तं जुहोमि मनसा
घृतेनेति चित्त मेषां जुहोमि मनसा च घृतेन
चेत्येतद्यथा देवा इहागमन्निति यथा देवा इहा-
गच्छानित्येतद्वीतिहोत्रा ऋतावृध ऽइति सत्यवृध
ऽइत्येतत्पत्ये व्विश्वस्य भूमनो जुहोमि व्विश्व-
कर्म्मण ऽइति योऽस्य सर्व्वस्य भूतस्य पतिस्तस्मै
जुहोमि व्विश्वकर्म्मण ऽइत्येतद्विश्वाहादाभ्यꣳ हवि-
रिति सर्व्वदेवाक्षितꣳ हविरित्येतत् † ॥ ४२ ॥

* 'प्रीणाति'- इति ख ।

† 'हविरित्येतत'—इति ग, 'हविरित्येतत' इति घ

अथ पूर्णाहुतिं जुहोति। सर्व्वं मेतद्यत् पूर्णᳪ सर्व्वेणैवैन मेतत् प्रीणाति ॥ ४३ ॥

सप्त ते ऽग्ने समिध इति। प्राणा वै समिधः प्राणा ह्येतᳪ समिन्धते सप्त जिह्वा ऽइति यानमूंस्सप्त पुरुषानेकं पुरुष मकुर्व्वंस्तेषा मेतदाह सप्त ऽऋषय इति सप्त हि त ऽऋषय आसन्त्सप्त धाम प्रियाणीति छन्दाᳪस्येतदाह छन्दाᳪसि वा ऽअस्य सप्त धाम प्रियाणि सप्त होत्राः सप्तधा त्वा यजन्तीति सप्त ह्येतᳪ होत्राः सप्तधा यजन्ति सप्त योनीरिति चितीरेतदाहापृणस्वेत्या* प्रजायस्वेत्येतद्घृतेनेति रेतो वै घृतᳪ रेत ऽएवैतदेषु लोकेषु दधाति स्वाहेति यज्ञो वै स्वाहाकारो यज्ञिय मेवैतदिदᳪ सर्व्वं करोति ॥ ४४ ॥

सप्त सप्तेति। सप्तचितिकोऽग्निः सप्त ऽर्त्तवः संव्वत्सरः संव्वत्सरो ऽग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेतत् प्रीणाति तिस्र आहुतीर्जुहोति

* 'चितीरेतदाहापृणस्वेथा' —इति ख ।

विद्वदग्निर्यावानग्निर्यावत्यस्य मात्रा तावतैवैन मेत-द्न्नेन प्रीणाति तिस्रः समिध ऽआदधाति तत् षट् तस्योक्तो बन्धुः ॥ ४५ ॥

तिष्ठन्त्समिध ऽआदधाति* । अस्थीनि वै समिध-स्तिष्ठन्तीव वा ऽअस्थीन्यासीन आहुतीर्जुहोति माꣳ-सानि वा ऽआहुतय ऽआसत ऽइव वै माꣳसान्य-न्तराः समिधो भवन्ति बाह्या ऽआहुतयो ऽन्तराणि ह्यस्थीनि बाह्यानि माꣳसानि† ॥ ४६ ॥

अथातः सम्पदेव‡ । षट् पुरस्ताज्जुहोति षडु-परिष्टात् षड्भिरात्मनः पृश्न्यर्यन्ति द्वाभ्या मश्मानं पृश्नि मुपदधाति चतुर्भिराग्नेर्यन्ति. पञ्चभिरग्नि-मारोहन्ति तदेकान्न त्रिꣳशदाहुतिरेव त्रिꣳशत्तमी द्वाभ्या मग्निं निदधाति तद् द्वात्रिꣳशद् द्वात्रिꣳशद-क्षरानुष्टुप्सैषानुष्टुप् § ॥ ४७ ॥

---

* 'ऽआदधाति'—इति ख ।

† 'माꣳसानि'—इति ग, माꣳसानि' इति ख, ङ,

‡ 'सम्पदेव'—इति ग, घ

§ '०सैषानुष्टप' —इति ग, '०सैषानुष्टुप' —इति घ

तद्या ऽअमूस्तिस्रो ऽनुष्टुभः । गार्हपत्ये सम्पादयन्ति तासा मेता मचैका माहरन्ति तद्यदेता मत्राहरन्त्यचैष सर्व्वो ऽग्निः संस्कृतः स ऽएषोऽत्र तस्मै नाल मासीद्यदन्न मात्स्यत * ॥ ४८ ॥

सो ऽग्नि मब्रवीत् । त्वयान्न मदानीति तथेति तस्माद्यद्देवैत मत्राहरन्त्यथैषो ऽल मन्नायाल माहुतिभ्यो भवति † ॥ ४९ ॥

अथो ऽआहुः । प्रजापतिरेवैतं प्रियं पुत्र मुरस्याधत्त ऽइति स यो हैतदेवं व्वेद हैवं प्रियं पुत्र मुरसि धत्ते ॥ ५० ॥

यद्वेवैत मत्राहरन्ति । यान्वै तान्त्सप्त पुरुषानेकं पुरुष मकुर्व्वन्नय मेव स यो ऽय मग्निश्चीयते ऽथ या मेषां ता मूर्द्धाꣳ श्रियꣳ रसꣳ समुदौहन्नेष स य मेत मत्राग्नि माहरन्ति तद्यदेत मत्राहरन्ति यैवैतेषाꣳ सप्तानां पुरुषाणाꣳ श्रीर्यो रसस्त मेत-

---

* 'मात्स्यत'—इति ग, 'मात्स्मत'—इति घ ।

† 'भवति'—इति क ।

द्रुर्ह्णं स मुदूहन्ति तदस्यैतच्छिर ऽआत्माय मग्नि-श्चित ऽआत्मान मेवास्यैतत् संस्कृत्य शिरः प्रति-दधाति ॥ ५१ ॥ २ ॥

॥ इति द्वितीयप्रपाठके प्रथमं ब्राह्मणम् [२. ३.] ॥

अथ मग्निप्रणयनार्थं यथोक्तं होमं विधायाथ तत् प्रयोगौपायिकीः ( ? ) * क्रियाः कर्त्तुं तदुचितं सम्मैष माह,—"अथातः मग्नेष्यतीति । प्रणेष्यमाणाग्नि मिध्मार्थं गार्हपत्ये प्रक्षिप्तं काष्ठमित्रस्तदुच्यन्छ † अग्निधारणार्थं मधस्तात् क्रियमाणाः सिकता उपयमन्यः ताश्चोपयच्छेति ‡ एतदुभयं प्रतिप्रस्थातारम् प्रत्युच्यते । हे होतः प्रणीयमानायाग्नये अनुब्रूहि अग्निप्रणयनीया ऋचोऽनुब्रूहि । हे अग्नीत् पराच्यास्कारेखया § अनुगच्छ ‖ । हे ब्रह्मन् 'आयुः शिशान' इत्येतद-

---

* 'तस्मायाणोपयिकीः'—इति क, 'तत्मायणोपयिकीः'- इति ग, भ, 'तत्मायाणोपयिकीः'—इति ग ।

† 'काष्ठमिकानंदद्यच्छ'—इति क, 'वाष्टमिकानंदद्यच्छ'—इति भ, 'पश्चिदां वाष्टमिकां तद्द्यच्छ—इति ग ।

‡ 'ताश्चोपयच्छताः कुरुत'- इति ग-पुस्तके ।

§ 'यर्थ्यंराशा ( एकरूपया ? )—इति क. भ ।

‖ का० श्रौ० सू० १८. ३. १६ ।

प्रतिरथाख्यं सूक्तं * जपेति एवं तत्र तत्र व्यापारे तं तं 'सम्प्रेष्यति' विनियुङ्क्तादित्यर्थः । अत्र सम्प्रैष "ब्रह्मन् प्रतिरथम् जपेति" यदुक्तं तस्योपयोग मभिधातुं सुराकल्प मवतारयति ॥ १ ॥

"एतद्वा इति । एतस्मिन् काले खलु एत मग्निं चय-नाख्यं यज्ञं तन्वमानान् करिष्यमानान् इडभावस्थादयः (?) अतएवाग्निविहारसमीपि गच्छतो देवान् दक्षिणभागेन एका 'असुरा रक्षांसि'त्वेन लोडार्थव्यत्ययेन लट्-प्रत्ययः । 'न यजध्वं' न विस्तारयध्व मिति । इन्तु मैच्छन् देवानां यज्ञं विहन्तु मि च्छन्नित्यर्थः ॥ २ ॥

यथात्तेदेवै रस्माकं मध्ये त्वमेव प्रशस्ततमो बलवत्तमश्च बलिष्ठश्च वीर्यवत्तम इति । अतस्त्वमिमानि रक्षांसि प्रति-पक्षं कुरुष्वेत्युक्ते इन्द्रेण मे ब्राह्मणो द्वितीयोऽस्त्वित्युक्ते ,तथैव कुर्म इति । बृहस्पतेर्ब्राह्मणस्यात्तमिन्द्रस्य द्वितीय मकुर्वन् ; तथा कृत्वा ते देवा इन्द्रेण बृहस्पतिना च दक्षिणतो दक्षिण-भागे नागकामसुरारक्षांसि चापहत्य अनाष्ट्रे अतएवाभये प्रदेशे एनं प्रकृतं यज्ञ मकुर्वत ॥ ३ ॥

"तद्वा एतद्" इत्यादिकस्याय मर्थः ,— देवाः पूर्वं यत् कर्माकुर्वन् एतस्मिन् कालेऽपि तदेव क्रियते खलु इद मिति । अपहननक्रियाविशेषणं इदं रक्षसा मवहनन पूर्वं

* वा० सं० १७. ३३ – ४४ ।

देवैरेव सम्पादितं तस्मादृत्विगार्त्यस्त्वेतत् कर्म यद्यपि न करणीयं तथापि यदेतत् कर्म करोतीति तद्देवा यदकुर्वन् करवाणीति धिया क्रियते न तु रक्षसा मपहननार्थं तस्य तु देवैरेव सम्पादितत्वात् किञ्च स्वय मपि चैतेन इन्द्रेण बृहस्पतिना च दक्षिणभागस्थितानाग्नकानसुरान् रक्षांसि चापहत्या नाष्ट्रे ऽभये देशे एतं यज्ञं तनवाम् भवतीति। ननु देवाः पूर्वं इन्द्रबृहस्पतिभ्यां रक्षांस्यघ्नन्नित्य तदस्तु प्रकृते क इन्द्रः को वा बृहस्पतिः कथं वा ताभ्यां रक्षसा मपहननं यत उक्त मुपपद्यत इत्याह ॥ ४ ॥

"स यः स इति। पूर्वं दक्षिणभागे रक्षांस्यपहतानिन्द्रः परामृश्यते। स य इन्द्रोऽस्ति स एष अप्रतिरथस्त्व इत्यर्थः ॥ ५ ॥

अप्रतिरथ मेवेन्द्रात्मकत्वमुपपादयति -- "आशुः शिशान* इति। मन्त्रप्रतिपाद्याया देवताया मन्त्रस्य वा भेदात् आशुः शिशान इत्यादिका ऐन्द्रं ऋचोभिरूपाः सदृशा भवन्तीति इन्द्रत्वेन स्वीकर्त्तु मुचिता भवन्तीति अर्थः। अप्रतिरथसूक्तस्थाना मृचां द्वादश सङ्ख्याया तस्मादेनः सकाशादसुरा रक्षांसि चापहन्त्यन्त इति प्रशंसति। † ) "द्वादश भवन्तीति। तासां छन्दः प्रशंसति — "त्रिष्टुभि रिति। त्रिष्टुभा वज्रत्वं वक्षिणेन्द्रेण सहोत्पत्तेः सा चोत्पत्ति स्तैत्तिरीयके श्रूयते— "उरसो बाहुभ्यां पञ्चदशं निरमिमीत मिन्द्रो देवतान्व सृज्यत

* वा० सं० १७ ३३।

† बन्धनीयिवान्तः प्रशंसितः पाठो नास्ति ग-पुस्तकान्तरेषु।

त्रिष्टुप्छन्दः इति। अथवा वीर्य्यत्वात्त्रिष्टुभो वक्षत्वं वीर्यवत उरःप्रदेशस्य निर्माणात्। अतएव श्रुतं,— त्रिष्टुप्छन्दो बृहत्साम राजन्यो मनुष्याणामविः पशूनां यस्मात्ते वीर्य्यवन्तो वीर्य्याद्ध्यसृज्यन्तेति। ननु प्रकृतस्याग्निकर्मत्वात् तत्रैतासामैन्द्रीणां कृता समर्न्नतार्थं स्यादित्यत आह,— "ता द्वाविंशति रिति। चतुश्चत्वारिंशदक्षरा द्वादश त्रिष्टुभः सम्भूयाष्टाविंशतिपञ्चशतान्यक्षराणि सम्पद्यन्ते चतुर्विंशत्यक्षराणां गायत्रीणां द्वाविंशतिस्तावदक्षरा भवन्ति। अतो द्वादश त्रिष्टुभो मिलित्वा द्वाविंशति गायत्र्यश्चाग्नेय्यो * भवन्ति अग्निना सहोत्पन्नत्वात्। अतएव श्रूयते,— "समुख तस्त्रिवृतमिरमिमीत तमग्निर्देवता च सृज्यत गायत्रीछन्दस इति, प्रकृतञ्च कर्माग्निसम्बन्धि भवन्ति। तत् प्रणयनात्मकत्वात्। अतस्ता ऋच ऐन्द्र्योपि छन्दःसम्पत्तिद्वारा प्रकृतिकर्म समर्न्नतार्था एवेत्यर्थः॥ ६॥

इत्थं ब्राह्मणक्रतस्याप्रतिरथ सूक्त † जपस्योपयोग मुक्त्वाग्न्युद्यमन ‡ समन्त्रकं विधत्ते— "अथैन मिति। "उदु त्वा विश्वे देवा अग्ने भरन्तु चित्तिभिरित्यादिना § मन्त्रेणेत्यर्थः।

---

* 'गायत्र्यस्ताश्च मेय्यो (१०गाय अत्रश्चाग्नेय्यो)"--इति क, भ।

† 'अब्राह्मणकृतस्याप्रतिरथसूक्त'--इति भ, 'अब्राह्मणस्याप्रतिरथसूक्त' इति ग।

‡ का० श्रौ० सू० १८. ३. १८।

§ वा० सं० १७. ५३।

तस्य मन्त्रस्य ब्राह्मणं प्रागुक्त मित्याह— "तस्योतो बन्धु रिति ॥ ७ ॥

उद्यमनानन्तरं * अध्वर्युप्रभृतीनां चित्यं प्रति † गमनं विधत्ते ‡— "अथैति। अत्र "पञ्चदिशो दैवि § रित्यादिभिः पञ्चभि र्ऋग्भिराग्नीध्रपर्यन्त गच्छन्ति। अध्वर्युप्रभृतयस्ता ऋचः क्रमेण व्याचष्टे— "देवाश्चासुराश्चेत्यादिना प्राजापत्यभूता देवाश्चासुराश्चेत्येते उभये दिग्विषयेस्पर्द्धां कृतवन्तः; पश्चाद्देवासुराणां दिशो हृत्वन्तः ततोगमस्य स्वाधिनी कृतवन्तः। अतो पञ्चदिशो दैवीरित्यादिभिः पञ्चभि र्ऋग्भि राग्नीध्रपर्यन्तं गच्छन्ति। एतस्ता ऋचः क्रमेण व्याचष्टे,— "यज्ञ मवन्त्वित्यनेन तथैव यजमानोऽपि इयं कुर्वतो भ्रातृव्यस्य दिशं स्वाधीनाः करोति। "दैवीरित्यनेन एनादिशो देवसम्बन्धिनीः कुरुते। असुरेभ्य उपगमय्य देवैः स्वाधीनीकृतत्वाद्दैवीरित्यनेन तथैव सम्पादितवान् भवतीत्यर्थः। "यज्ञ मवन्तु दैवीत्यनेन प्रकृतस्यैव यज्ञस्यावनं विवक्षित मिति दर्शयति,— "यज्ञ मिम मिति। अमतिशब्दस्यागनेकार्थ इति व्याचष्टे— "अपामतिमिति। अशनायोदन्येत्यादि ||

* 'उपयमानान्तरम्' इति क।

† चित्यं प्रति [ आग्नीध्रपर्यन्त ]—इति क।

‡ का० श्रौ० सू० १८. ३. १६।

§ वा० सं० १७. ५४।

|| "अशनायोदन्यधनाया बुभुक्षापिपासागर्द्धेषु"—इति पा० सू० ७. ४. ३४।

सुवर्णाशनाख्यः शब्दः क्वजन्तो निपातितः। रायस्पोष इति धने तद्विषये पोषेवेति वस्तु मभिप्रेत मित्याह,— "रायस्पोष इति रायस्पोषे अधीन्यत्रापि तथैव विवक्षित मित्याह,— "राय-स्पोषं अश्नोति यजमानस्यैव पूजकत्वात्॥ ८॥

"मामहान" शब्दो यजमानपर इत्याह,— "यजमानो वा इति। यत्नेतदुक्थानि स्तोत्रशस्त्राणि पवर्ग्याङ्गानि भवन्ती-त्यभिप्रेत्योक्थपत्र इत्याह,— "उक्थपत्र इति। यतो देवाः 'तप्तं घर्मं' घर्मलक्षणं अग्निं 'परिगृह्याय यजन्त'; अत उच्यते मन्त्रे,— 'तप्तं घर्मं इत्याह— "तप्तं घर्मं मिति। उत्तरवाक्य मप्येव मेव व्याचष्टे,— "ऊर्जेति। 'ऊर्जा' आज्यदधिपयःप्रभृति ता रसेनेत्यर्थः॥ ८॥

अग्निर्देवमस्वभिव्लाद्दारयत्त्वाज्जोपयितृत्व मत्वाभाग्निरेव 'देयायेत्यादिनोच्यत इति। देवाग्रेति उत्तरवाक्यद्वयं प्रमि-त्यार्थं मित्याह,— "देवश्रीरिति परिगृह्येति 'देवा देवेभ्य इत्यवर्यन्त' इयेतत् पदं व्याचष्टे,— "अध्वरो वा इति। अध्वर्यन्त इति "कव्यध्वरपृतनस्यर्चिलोप इति * अकार लोपः॥ १०॥

"वीतं शमित" मित्यस्य पदद्वयस्यार्थ माह,— "इष्ट स्विष्ट मिति। अवगृहीतब्रह्मणा यश स्थानं यथायथं मन्त्रं जप एव 'तुरीयो यज्ञ' इति व्याचष्टे,— "अध्वर्युः पुरस्तादिति 'वाका-शिष' इत्यनयोः शब्दयोः समानाधिकरणाशङ्कां निवारयति।

* पा० सू० ७. ४. ३९।

"ततो नो वाकाशाशिषमेति। एतस्य प्रणीयमानस्याग्नेरादित्यात्मकत्वात्॥ ११॥

स एष प्रणीयमानोऽग्निस्तेजः सूर्यस्येव रश्मिभिर्युक्तो हरितवर्णः 'केशः' तेजोरूपः सविता अनवच्छिन्नं पुरस्तादुदगच्छति। अतो मन्त्र इममेवार्थमाचष्टेत्याह,— "सूर्यरश्मिरिति। कृत्ताः पशुजनकत्वेन 'पूषा' इति पशव्यः उच्यते वाग्नयेरनुज्ञायां प्रवर्त्तन्त इत्ययमर्थः मन्त्रभागेन विवक्षितः इत्याह,— "पशवो वा इति। 'प्रेरत' इति ईरगतौ * इत्यस्यादादिकस्य लिटि बहुवचने रूपम्। अग्नेः प्रजापत्यात्मकत्वेन सर्वस्यापि द्रष्टृत्वाद्रक्षितत्वाच्च तदाग्रं 'सम्पश्यन्नि त्यादि मन्त्रभागः समर्थेतार्थमित्याह — "सम्पश्यन्निति। देवा दीव्यन्त देवसम्बन्धिन्यः पञ्चदिशः अमति मननेच्छा दुर्मति अशास्त्रीयां मनोज्ञापन्नाधमानाः धनं तद्विषये पोषं च यज्ञपतिं सम्बन्धिन्य एनं प्रणीयमानाग्निः रक्षणं यज्ञ सवत् अस्यादिति "छन्दसि लुङ् लङ् लिट" इति लोडर्थे लुङ् प्रत्ययः†। किञ्चाय मपि यज्ञः धने तत् पोषेचाधितिष्ठत्विति प्रथममन्त्रस्याय मर्थः। सम्यग्दोमे अग्नौ प्रणीयमाने सामद्वानेऽयर्थं पूजको यजमानोऽधिकारभावेनानुगच्छति। उक्थ्यान्येवाङ्गानि यस्य स उक्थ्यपत्र ईश मन्त्रो यज्ञियो वामवाग्निरध्वर्युणाधारितः किञ्च देवास्तस्य धर्मात्मकं न मग्नि

* "ईर गतौ कम्पने च" अ० आ० १०८ धा०।

† पा० सू० ३। ४। ६।

परिग्रहाय यजन्त आमत्वादेव च यत्स्वरूपं तं चाज्यादि-हविर्लक्षणेनानेनागमयन्तेति द्वितीयस्यार्थः । होमसम्बन्धिने धारयितेरजोषयितृतमायाग्नये हविर्दानार्थं तत् प्रणयनं क्रियत इति वाक्य शेषः । किञ्च यो देवश्रीः श्रियन्त इति श्रियः देवाः श्रियो यस्य स तथोक्तः ; भक्तेभ्यः श्रियं दातुं मनो यस्येति श्रीमनः , शतानि पयांसि यस्यासौ शतपयः , त मग्निं परिगृह्य देवाय जनःप्रदेशं गतवन्तः । गत्वा च देवा ऋत्विग्भि र्या देवेभ्यो यज्ञ मिच्छन्तः स्थितवन्त इति तृतीयस्यार्थः । "अग्निनेति तृतीयैकवचनस्य सु इत्यादेशः । स मिता अन्यत्र यागाय हविः वीतं इष्टं यत्र यस्मिन् प्रणयनप्रदेशे हव्यं हवनार्ह मग्नि मध्वर्य्वादीनां 'मन्त्रं अपावाक् तुरीयो यज्ञो गच्छति तथाविधानात् तस्मादस्मे ऋग्यजुस्सामलक्षणानि वाक्यानि चाशिषश्च नोऽस्मान जुषन्ता मिति चतुर्थस्यार्थः । सूर्यस्य रश्मिभिर्युक्तो हरितवर्णकेशः ज्योतिरूपः प्रणीयमानोऽग्निलक्षणः सविता अनवच्छिन्न मुद्गच्छति । तस्याग्ने रनुज्ञायां अस्य महिमानं विद्वान् पूषा याति ( तदुत्थायाः पशवः प्रवर्त्तन्त इत्यर्थः । किञ्च सोऽग्नि विश्वानि भुवनानि सम्पश्यंस्तेषां रक्षको भवतीति पञ्चमस्यार्थः ) * ॥ १२ ॥

तथैवैतद्यजमानो भ्रातृव्यस्य हन्ता इति सामान्येनोक्तं सम्प्रति ता एव पञ्चदिशो विशिष्य दर्शयन् तासा मुक्त मर्थं स्वाधीन-

* बन्धनीचिह्नान्तः प्रदर्शितः पाठो नास्ति ज-पुस्तकादन्यत्र ।

तथा प्राप्तिमाह— "तथा इति, तदिति। 'देवा' यस्मिन् काले 'असुराणां' दिशो वृञ्जत तस्य कालस्य परामर्शः एतच्छब्देनानन्तरोक्ता मन्त्राः परामृश्यन्ते। अहृच्छातिभ्यो य मभितवन्तः समारोहयन् स्वाधिनो कृतवन्तः। "अथो इति। किञ्च देवा कं तस्मिन् काले 'एताभि' ऋग्भिः 'आतः' सूर्यावस्थानप्रदेशलक्षणान्तरिक्षपर्यन्तं समाप्नुवन् तद्देवाय मपि यजमानो भ्रातृव्यतोपगमप्यस्वाधिनो कृतास्ता एषदिशः आतः अन्तरिक्षात्मकाग्नीध्रमण्डपपर्यन्तं सम्प्राप्नोति ॥ १२ ॥

उक्ते मन्त्रे आग्नीध्रपर्यन्तं गत्वा तत्रैकस्य पृश्निवर्णस्याश्मन उपधानं विधत्ते *— "अर्थेति। 'पृश्नि शब्देन श्वैत्य †' मुच्यते पृश्नेरश्मन ‡ उपधानेनादित्यस्यैवोपधानं भवतीत्याह। "असौ वा इति। आदित्यमण्डलसादृश्यप्रदर्शनेनोक्त मश्मनः पृश्नित्व मुपपादयति। पृश्नि भंवर्वीति तस्य चाश्मन उपधानं गार्हपत्याहवनीययो र्मध्ये कर्त्तव्य मित्याह— "त मन्तरेणेति। गार्हपत्याहवनीययोरधस्तनोपरितनलोकद्वयात्मकत्वाल्लोकद्वयस्य च मध्ये सूर्यस्य तपनात् सूर्यात्मकस्याश्मनस्तत्रोपधान मुपपन्न मित्याह। ( "अयं वै लोक इति। गार्हपत्याहवनीययो र्मध्यभागस्योपधान

* "आग्नीध्रदेशादश्मिनं पृश्निमश्मिनं पृश्न्यश्मान मुपदधाति"— इति का० श्रौ० सू० १८. ३. १६।

† "श्वैत्य०" or "चैत्य० ?" इति क।

‡ "पृश्न्य०नं ततं शुक्लं पाषाणं विचित्रवर्णं वा" इति का० श्रौ० सू० १८. ३. २०।

स्थानतया विज्ञानादाग्नीध्रादन्यत्रापि तदुपधानं स्यादित्यत आह ॥ १४ ॥

"आग्नीध्रवेलाया मिति। 'वेला' शब्दः अवकाश माचष्टे। गार्हपत्याहवनीययोरधस्तनो) * परितन लोकात्मकयो र्मध्यवर्त्तित्वयाग्नीध्रस्यान्तरिक्षात्मकत्वं व्यक्त इत्यर्थमार्ग उच्यते, तत्रैतस्याश्मन उपधानं क्रियते तस्मादितः प्रदेशादूर्द्ध † मार्गं एष सूर्य स्तपतीत्यर्थः ॥ १५ ॥

अथ तस्याश्मन आदित्यात्मकत्वादादित्यस्य च प्राणाद्यात्मकत्वात्तदुपधानेनात्मनि प्राणादिधारणं सम्पाद्यत इत्याह,— "स एष इति। 'स' आदित्यात्मकादित्यरूपत्वात् आदित्यस्य च प्राणत्वं तदुपाय प्राणिन चेष्टन्ते। तदस्तमये तु न चेष्टन्त इति। अतएव श्रूयते— "यो सौ तपन्नुदेति। स सर्वेषां भूतानां प्राणानादायोदेति।०—०। असौ योऽस्तमेति। स सर्वेषां भूतानां प्राणानादायास्तमेति इति ‡। प्राणत्वादेष वायुरूपत्वं प्राणिना मेव जीवनकालसम्बन्धात्। "आयुर्ह्येतदिति। एषो श्मा यतः कारणादायु एतदिति नपुंसकलिङ्ग मायुरित्येतद्रूपं तस्यायु रयं तद्वता मेव भोक्तृत्वात्। अत एतदयं तस्मात् तदुपधानेन स्वकीय मात्मनि प्राणादीन् धारितवान् सम्भवति ॥ १६ ॥

अथ तस्योपधाने मन्त्रद्वयं प्रदर्शयद् व्याचष्टे,— "स उप-

---

* वन्धनीचिह्नान्तः प्रदर्शितः पाठो नास्ति ज-पुस्तकादन्यत्र।

† 'प्रदेशाद् अर्ध्वं'- इति क, 'प्रदेशादूर्ध्वं' इति ज।

‡ तै० आ० १. १४. १

दधाति विमान एष *" इति। 'हि' यस्मात्कारणात् 'एष' सूर्यो-ऽभूत ग्रामस्य निर्माता द्युलोकस्य मध्ये भास्ते, भत उक्तं,— 'विमान' इति उदयमानः सूर्यः पृथिव्यादीन् स्वप्रकाशेनापूरयतीति। त मर्थ माहेति व्याचष्टे,— "आप प्रिवानिति। 'प्राः पूरणे' †— इत्यस्माद्वर्तमानार्थस्य लिटः कसुरादेशः। 'विश्वाचीघृताची'पदाभ्यां विश्वेषां भूतानां ‡ च व्यापनात् वेदयः स्रुचश्च विवक्षन्त इत्याह,— "स विश्वाचीरिति, "पूर्व मपर मिति। पृथिवी द्युलोकमभीयन्ते, किञ्च 'पूर्व' मित्यनेन पूर्व चितो गार्हपत्या उच्यते,— भपर मिति भनेनेदानीं चीयमान आहवनीय इति व्याचष्टे,— "भन्तर पूर्व मिति ॥ १७ ॥

द्वितीय मन्त्रे,— "उक्षा समुद्रः §। ( पूर्वस्याद्योनिं" मध्ये दिवस इति पादत्रयार्थः प्रसिद्ध इत्याह। "उक्षा समुद्रो भरुण इति चतुर्थपादे 'रजः' शब्देनैव लोका ) ‖ विवक्ष्यन्त इत्याह,— "विनक्रम इति। भूत ग्रामस्य निर्माता धाता पृथिव्या अन्तरिक्षं ता समन्तात् पूरयन् एष सूर्यो द्युलोकस्य मध्ये तिष्ठति; किञ्च स सूर्यो पूर्वापरञ्च केतु लोक मन्त-

* वा० सं० १७. ५६।

† अ० धा० १०६१ धा०।

‡ 'विश्वेषां हविषां घृता'-इति भ,

§ वा० सं० १७. ६०।

‖ वन्धनीचिह्नान्तः प्रदर्शितः पाठो नास्ति ञ पुस्तकान्तरेषु।

द्यावापृथिव्यो र्मध्ये गार्हपत्याहवनीययो र्वा मध्ये विश्व-मोमुव अभिनष्टे पश्यतीति प्रथमस्यार्थः। तथाहि — "आदित्याज्जायते वृष्टिः"* इति तस्य वृष्टिहेतुत्वात्। अतएव समुद्रात्मकः वर्णनाकम: पर्णशब्देन पतन मुच्यते। शोभन-तपन एवंविधः सूर्यस्य लोकस्य पितृरूपस्य योनिं स्थान माविवेश भूलोकादादित्याज्जायमान इव दृश्यत इति तस्य पितृलोकोपचारः। किञ्च देवो मध्ये आग्नीध्रमण्डपलक्षणे निहितः वर्णन 'पृश्निरश्मा' अश्मरूपः सूर्यः विविधं लोका-क्रमणे 'छन्दसि लुङ्लङ्लिटः' इति वर्त्तमाने 'लिट्' "विक्रम-माणो वा एष एषां लोकाना मन्तान्याति" इति श्रुतेः। रजस इयेकवचनं मन्तानिति। (निवचनं वा विवक्षितं लोकाना मन्तान् सीमान् पाति स्वकीयेन प्रकाशेन तमो निवर्त्तयन् पदार्थांश्च दर्शयन् रक्षतीति)† द्वितीयस्यार्थः॥ १८॥

उपधान मनयोर्हितं प्रशंसति,— "द्वाभ्या मिति। अथ तयोरेव छन्दः प्रशंसति,— "त्रिष्टुभ्या मिति। 'एष' सूर्य स्त्रैष्टुभ (त्रैष्टुभे अन्तरिक्षे वर्त्तमानत्वादन्तरिक्षस्य त्रैष्टुभ)‡ त्वं तैत्तिरीयके सूर्ये श्रूयते — "गायत्री पृथिवी त्रैष्टुभ मन्तरिक्ष मिति§ प्रकृतस्यात्मन इष्टकान्तरवदुपधानस्य विधानात्तद्वदेव-

* मनु मं० ३. ७६।

† बन्धनीचिह्नान्तः पाठो नास्ति ज-पुस्तकादन्यत्र।

‡ बन्धनीचिह्नान्तः पाठो नास्ति ज-भ-पुस्तकयोरन्यत्र।

§ "गायत्री वै पृथिवी त्रैष्टुभ मन्तरिक्षं"—इति तै०सं० १. ७. ५. ४

साधनप्रसक्तो निषेधति न सादयतीति तत्रोपपत्ति माह— "असक्तो ह्येष इति। स एष सूर्यः असक्तः क्वचिदेवावस्थितो न भवति सर्वत्र परिभ्रमणादित्यर्थः। माभूदसक्तत्वात्तस्य सादनं सूददोहसाधिवदन मपि न कर्त्तव्य मित्यत आह— "न सूददो हसाधिवदतीति। सूददोहसाधिवदन मपि न कर्त्तव्यं कुत इत्यत आह,— "प्राणो वा इति। प्राणात्मके सूर्ये प्राणात्मकस्य सूददोहस्या पिष्टपेषणवन्निष्फलत्वादित्यर्थः। तस्योपहितस्यात्मनो रक्षां विधायाहवनीयदेशंप्रति गच्छेदिति विधत्ते,— "तमि-धायेति। यथाऽश्मान न नश्येत्तं निधायाश्मोभ्रसमीपदेश मति-क्रामेयु*रित्यर्थः॥ १८॥

"तस्योक्तो बन्धुरिति "इन्द्रं विश्वा अवीवृधन्† इतीन्द्रं हि सर्वाणि भूतानि वर्द्धयन्तीत्यादिनास्य ब्राह्मणं षष्ठकाण्डेऽभि-हितम्। "देवह्वरित्यादिकस्याय मर्थः,— यतो यज्ञो देवानाह्वय-तीति देवहूः 'सुम्न' मिति सुखनामधेयं सुम्नयाह्वयतीति सुम्नहूः तत् साधनत्वात्। अतो देवहू र्यज्ञो देवानावक्षत् आवहतु सुम्नहूर्यज्ञो देवानावहत्वित्युच्यते। अत्रैवाग्निरिति अग्निर्देवो देवान् यजतु आवहत्वेतदुक्तं भवतीति यत्रक्षत्। वक्षत् यक्षत् वहतेर्यजेश्च सिब्बहुलं लेटीति‡ सिप्प्रत्ययो लेटोऽडाटाविस्य-डागमः इतश्चलोप इति तिप इकारलोपः॥ २०॥

---

* निधायैनमतिक्रामन्तीन्द्रं विश्वा इति"—का० श्रौ० सू० १८. ३. २१।

† वा० सं० १७. ६१।

‡ पा० सू० ३. १. ३४।

"वाजस्येति" "उद्ग्राभश्चेति" मन्त्रद्वयं * निगदव्याख्यात मित्याह,— "वाजस्य मा प्रसव इति। पञ्चदिशो दैवीरित्यादिभि र्मन्त्रै गार्हपत्यादाग्नीध्रपर्यन्तं गमने भ्रातृव्यसम्बन्धिनीः सूर्यादर्वाचीः। पञ्चदिशस्ततो गमय्य स्वयं प्राप्तवान् भवतीति उक्तम् ,—

अथ "इमं विश्वा अवीवृधन्" इत्यादिभि र्मन्त्रैराग्नीध्रादाहवनीयं पर्यन्तं गमने सूर्यादूर्ध्वा भ्रातृव्यसम्बन्धिनीश्चतस्रो दिश स्वयैव प्राप्नोतीत्याह ,— "नद्या अमुष्यादित्यादिना — "मात इति द्युलोकपर्य्यन्त मित्यर्थः ॥ २१, २२, २३ ॥

चित्याग्नि समीपगमनानन्तरं † क्रमध्व मित्यादिभिः पञ्चभि र्मन्त्रै ‡ स्तस्यारोहणं विधत्ते §— "अयाग्नि मिति। चित्याग्निरूपरिधार्यमाणे उख्याग्नौ होमविधानेन तत्र तद्धा वचनार्थं कस्याश्चिदपेक्षणादग्निनिधाने यजमानस्यापि निधानात् तदपेक्षा मारोहन्तीति बहुवचनम्। "स्वर्गो वै लोको नाकः" इत्यदिनारोहणमन्त्रान् व्याचष्टे— "क्रमध्व मिति ‖ तेषा मेव परेषामभिधानम्, 'अनेनाग्निना' चित्याग्निना 'एतम्' इत्यभिनयेन निर्देशः 'एतं स्वर्गं' क्रमध्वं अप्रतिविधं न गच्छतीत्येतदुक्तं भवतीत्यर्थः। एते क्रममाणा अध्वर्युप्रभृतयः एन मुख्याग्निं हस्तेषु बिभ्रतः धारयन्तः अतः रक्षा एवार्थो मन्त्रेण प्रतिपाद्यते।

* वा० सं० १७. ६३, ६४। † 'गमनांतरं'—इति ख, भ।

‡ वा० सं० १७. ६५—६९।

§ "क्रमध्व मग्निनेति चित्यमारोहन्ति।"—इति का० श्रौ० सू० १८ ४. १।

‖ वा० सं० १७. ६५।

"दिवस्पृष्ठं स्वर्गंलोक मित्यनेन मन्त्रे 'स्वर्गत्वा' इत्यत्र स्वरित-स्वार्थ उक्तः। अत्र 'दिव'-शब्देन द्युलोक उच्यते, द्युलोकस्य पृष्ठं उपरितनं स्वर्गं सुखातिशयहेतुं तस्यैवस्थानविशेषां यत्रा देवेभिर्देवैर्मिश्राः संयुताः सन्तस्तिष्ठतेत्यर्थः। 'दिवस्पृष्ठ' मिति षष्ठ्याः पतिपुत्रेत्यादिना विसर्जनीयस्य सकारः॥ २४॥

प्राची * वे दिमन्वे रिति। प्राचीदिमन्वेः सम्बन्धिनी खलु अतएव तैत्तिरीयकं— "प्राचीदिक् अग्निर्देवता"-इति †। "अग्ने त्व मिति। अस्येष्टका स्वरूपस्याग्ने त्वं पुरोवर्त्तमानोऽग्नि र्भवेदं यज्ञे इत्युक्तं भवति। "दीव्यमान इति। दीप्यते इत्यस्यार्थ-कथनम्॥ २५॥

"पृथिव्या अह † मिति। गार्हपत्यस्याग्नीध्राहवनीयानां पृथिव्यादिलोकत्रयात्मकत्वात् क्रमेण तत्रागमनात् पृथिव्यादि-लोकत्रयं क्रमेण रुढावानस्मीत्यर्थः। 'आरुह' मिति "कृमृदृरुहिभ्य श्छन्दसि-इति च्लेरङादेशः" ‡ "दिवो नाकस्येति। नाकस्य सुखहेतुभूतस्य द्युलोकस्य 'पृष्ठात् ज्योतिर्विशिष्टं' प्रकाशमानकं लोक 'मगामह' मित्येतदुक्तं भवति। अत्रापि पूर्ववत् सुखाति-शयहेतुभूतो द्युलोक देश्यविशेषः स्वर्गशब्देनोच्यते॥ २६॥

"न हैवेति। ये स्वर्गंलोके यन्ति ते फलान्तरमपेक्षन्ते खलु, अत उक्त 'स्वर्यन्त ‖ इति। एष एवेति सर्वेण प्रका-

* वा० सं० १७. ६६। † तै० ब्रा० ३. ११. ५ १
‡ वा० सं० १७. ६७। § पा० सू० ३. १. ५२।
‖ वा० सं० १७. ६८।

रेव जगद्धारयतीति। 'एष एव यज्ञो विश्वतोधारः' येन एवं यज्ञं वितन्वते एत एव सुविद्वांसः खलु विदुषा मेव यज्ञ निष्पादकत्वादित्यर्थः ॥ २७ ॥

"अग्ने प्रेहीति*। "इम मेतदिति। 'त्व मेषां' देवान् प्रष्टुमिच्छतां 'प्रथमः' प्रेहीति इम मुख्याग्नि माह-अग्नेर्मुख्यत्वपूर्वदुपकारत्वात्। 'इयक्षमाणा' इति व्याख्यातं यजमानं भृगुभिरितिसृष्ट मन्यत्। उक्त मन्त्रस्याध्येन चित्याग्नेरारोहणेन स्वर्गे लोके विद्यमाना भ्राद्रव्यसम्बन्धिनोः पञ्चदिशः पूर्वतः प्रासवान् भवतीत्याह ॥ २८ ॥

"नक्ता अमुष्मिंल्लोक इति। अत्रापि 'प्रातः' इति द्युलोकादुपरितन स्वर्गावधित्वेनोच्यते ॥ २९ ॥

चित्याग्निसमारोहणानन्तर मश्विमुख्यम्नौ होमं विधत्ते। "अथेति। अभि जुहोति अभिहोमेनेप्सित मत्वादेन मिति कर्मणि द्वितीया विहिता। आहुतिश्चित्यं प्रासस्याग्ने रुपरिष्टादन्नं सम्पाद्यत इत्याह— "एतद्वा इति। विहिते होमे द्रव्यं विधत्ते— "कृष्णाये शुक्लवत्साये पयसा" † इति, उक्तलक्षणाया गोः पयस उपादाने कारण माह— "रात्रि र्वा इति। रात्रि खलु कृष्णाशुक्लवत्सास्याराव्रेरसावादित्ये वत्सः यथा गोः समीपे वर्त्तते तद्वदस्य रात्रिसमीपे वर्त्तमानत्वात्। अथ मेवार्थं स्तैत्तिरीयके श्रूयते— "अग्निवादित्यश्चरात्रेर्वत्सेति आदित्य"-इति। एवञ्चास्याग्नेरादित्यात्मकत्वात् तथाविधाया गोः पयसा होमे स्वलोकभागेन तदेव विभ्रियते,— "स्वेन

* मा० सं० १७. ६६। † का० श्रौ० सू० १८. ४. २।

रसनेति । तत्र प्रीणितवान् भवति, प्रीणयितवानित्वान्यक-स्माद्वेरूपा एव वर्त्तमानत्वेनोपधार्यमाण स एवोत्थाप्नो जुहुया-दित्याह,—"उपरीति । प्रकृतहोमे साधारणं स्रुवः प्राप्नो-तीति तदपवादत्वेनदोहनं विधत्ते— "दोहनेनेति । दोहनेन हि पयः प्रदीयत इति दोहनान्तरं पक्षान्तरे दोहनेने खलु पयः प्रदीयत इत्यर्थः ॥ २० ॥

प्रकृत मेवातिहोमं प्रकारान्तरेण प्रशंसति— "यद्वेवेति । अग्नेः शिरोवत् प्राधान्यात् सच्छिरस्त्वं पयसः प्राणत्वं तत् पुष्टिहेतुत्वात् । "यथा स्वयमातृण्णा मिति । होमावसरे स्वयमातृण्णाया उपरि किञ्चिद्यथा 'प्रचरेत्' तथा होमं कुर्यात्; एवञ्च स्वयमातृण्णायाः प्राणत्वात् । अग्नेस्तु शिरस्त्वात् प्राणञ्च शिरश्चेत्युभे अपि ययो लवणेन रसेन सन्तनोति तदेव विहणोति 'सन्दधाति' परस्परसम्बन्धं करोतीत्यर्थः । प्रकृतहोमो मन्त्रौ दर्शयन् तत्र प्रथममन्त्रस्यब्राह्मण षष्टकाण्डे प्रागेवाभिहित मित्याह— "नक्तोषासेति * ॥ २१ ॥

* वा० सं० १७. ७० ।

"स्वयमातृण्णा मध्यग्निं धारयन् शुक्लवत्सा पयसाभिजुहोति लब्धाया दोहनेन स्वयमातृण्णा मवमिचन्नक्तोषासेति । स्वयमातृण्णाया उपरि धारयन्नग्निम् लब्धायाः गोः शुक्लवत्सायाः पयसा दोहनेनाभि-जुहोति स्वयमातृण्णा मवमिचन् । स्वयमातृण्णाया उपरि प्रतिप्रस्थाता त मिध्यग्निं धारयन् अन्वयेन पाविन्न जुहूस्थानीयेन जुहोति ।"

—इति का० श्रौ० सू० १८. ३. २, २ ।

द्वितीयं मन्त्रं व्याचष्टे— "अग्ने: सहस्राक्षेति * हिरण्य-शकलैर्वा इति। अत्रष्टोऽग्नि: ओषधि विनियुक्त: † सहस्र-सङ्ख्याकै‡ हिरण्यशकलै: सहस्राक्ष: खलु, अतश्च मन्त्रे तथा सम्बो-ध्यत इत्यर्थ:। प्रकाशकत्वसाधारण्येन हिरण्यशकलानामक्षितो-पचार:। "यदद: शतशीर्षेति। प्रजापतिशब्देनोचितेष्वसुषु अन्तवर्त्तमानेन अग्नौ प्रतिष्ठितेषु तेषु स एव शतशीर्षोरुद्र: समभूदिति काण्डस्यादावुक्तम्। अतोऽत्राह: श-शब्देन सकाल: परामृश्यते अतोस्मिन् काले "शतशीर्षाऽरुद्रो सृज्यतेति। यत्र अत उक्तं मन्त्रे शतमूर्द्धन्नितीत्यर्थ:, य: शतशीर्षा भवति तस्य शतसङ्ख्याका: प्राणा: सहस्रसङ्ख्याका: व्यानाश्च भवन्ति। शतं सहस्र मित्यपरिमित नामधेयम्। तस्मादुच्यते,—" शतं त इति। त्वं सर्वस्मै इति। 'सहस्र' मित्यपरिमित सङ्ख्यावच-नात् सहस्रस्येत्यनेनापरिमित सङ्ख्यावत इत्यस्यार्थस्याभिधानात् सर्वस्मा इत्येतदुक्तं भवति। सहस्रेति लिङ्गव्यत्यय: "अधीगर्थदये-शाङ्कर्मणि"§-इति षष्ठी प्राप्ता षष्ठार्थे चतुर्थी वक्तव्येति। 'सर्वस्मै राय इति चतुर्थी। "एष वै वाज इति। 'वाज'-शब्दोऽन्नवाची तद्धे-तुत्वादेवो ऽग्निर्वाज: खलु अतस्तस्मै ते विधेम वाजाय स्वाहेत्यनेन त मग्निं प्रीणाति। हे सहस्राक्ष: शतमूर्द्धं अग्ने! ते शतसङ्ख्याका:

* 'वा० सं० १७. ७१।

† इहैव पुरस्तात् का० ८. ७४. ७।

‡ 'इयंस्याकै:'—इति ह. भ, न।

§ पा०, सू० २. ३. ५२।

शाखाः सहस्रसङ्ख्याकाः व्यामाश्च भवन्ति ; त्वं सर्वस्य धनस्य 'ईशिषे' ईश्वरो भवति ; तस्मै धनहेतुत्वे तदात्मकाय ते वयं परिचरेम । इदं हवि स्ते स्वाहुत मस्तु इति मन्त्रार्थः ॥ १२ ॥

मन्त्रगतेन हिरण्येन सकलस्याग्नेरभि होमः सम्पद्यत इति प्रशंसति ,— "हाभ्या मिति ॥ १३ ॥

अग्नि होमानन्तर मुख्याग्नेश्चितीनां मुपरि निधानं विधत्ते— "अथैन मिति । निधानमन्त्रे "सुपर्णोऽसि * गरुत्मान् † इत्यस्योपयोग माह । 'एतद्वा' इत्यादिना लोके हि योनौ सिक्तं प्रजननं समर्थं रेतो विक्रियते अवयवविभागवत् क्रियते । अतोऽत्रापि योनिरूपाया मुखाया संस्कृतस्याग्ने रेत-स्स्थानस्यापि विकृत्या भवितव्य मिति । पूर्वं विकृत्या विकृति-साधनभूतेन मन्त्रेण "सुपर्णोऽसि गरुत्मान्" इत्यादिकेन सुपर्णं गरुत्मन्तं कृत्वा विकृतवान् ‡ । तथा चयनकालेऽपि 'सुपर्णं गरु-त्मन्तं' एव कृत्वा विकृतवान् ; सम्प्रति 'सुपर्णोऽसि गरुत्मान्' इत्यादिकेन 'सुपर्णं गरुत्मन्त' कृत्वा निहितवान् भवति । चीय-मानस्याग्नेः पक्ष्याकारेण चयनात् 'सुपर्णोऽसि गरुत्मान्' इत्यु-क्तम् । 'गरुत्मान्' प्रशस्तपक्षत्वात् , अतएव 'सुपर्णः' पर्ण-शब्देन

* "तस्या मध्ये निदधाति सुपर्णोऽसीति वषट्कारेण स्वयमातृ-ण्णायां सुपर्णोऽसीति अन्वयेन वषट्कारेण चाग्निं स्थापयतीत्यर्थः ।"
—इति का० श्रौ० सू० १८. ४. ५. ६ ।

† वा० सं० १७. ७२ ।

‡ "वित्तवान्"—इति क ।

